R. 96

4206
6-7-57

# CHANDRÂLOKA

OF

**SHRI JAYADEVA KAVI**

WITH A COMMENTARY CALLED **Ramā** BY VAIDYANATH PAYAGUNDA




EDITED BY

**MAHADEVA GANGADHARA BAKRE**

Printed by Manilal Itcharam Desai at
**THE GUJARATI PRINTING PRESS,**
SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY.

V. S. 1970 A. D. 1914

**Price Eight Annas**

0-90-0

SGDF
Sri Gargeshwari Digital Foundation



SRI CHAMARAJENDRA VEDA MAHAPATHASALA
श्री चामराजेन्द्र वेद महापाठशाला
20. FEB. 1926
BANGALORE.


श्रीपीयूषवर्षजयदेवकविविरचितः

# चन्द्रालोकः ।

पायगुण्डोपाह्ववैद्यनाथविरचितया
रमाख्यव्याख्यया सहितः ।



SANSKRIT COLLEGE
भजत गैर्वाणीं
LIBRARY
FORT, BANGALORE.


बाक्रे इत्युपाह्वगङ्गाधरभट्टात्मजमहादेवशर्मणा

संस्कृतः


मुम्बय्यां

' गुजराती ' मुद्रणालयाधिपतिना मणिलाल इच्छाराम
देशाई इत्यनेन स्वीये मुद्रणालये
मुद्रयित्वा प्रकाशितः ।

संवत् १९७०. खिस्ताब्दः १९१४.

मूल्यमष्टवाणकाः ।

०-१०-०


SGDF
Sri Gangeshwari Digital Foundation

# निवेदनम्।

## ॐनमः कुञ्जविहारिणे।

चन्द्रालोकालंकारो हि प्राचीनः सरलः काव्यप्रकाशादिवत्कृत्स्नविषयः साहित्यशास्त्राध्येतृभिः प्रथममध्ययनार्हो ग्रन्थः। आसीच्चास्य पुरा सर्वत्र तथाऽध्ययनप्रचार इति चतुरधिकशतनिबन्धप्रणेतॄणां दक्षिणदिग्वास्तव्यद्रविडपुङ्गवश्रीमदप्पयदीक्षितानामिममालम्ब्य 'कुवलयानन्द' प्रणयनप्रवृत्त्योन्नेतुं युक्तम्। नहि संभवति तादृशो विपश्चित्पञ्चाननः स्वानधीतमनतिप्रसिद्धं वा परग्रन्थमालम्ब्याधिकसौष्ठवार्थं च प्रायः सर्वत्र क्वचित्पदं, क्वचित्पादं, क्वचित्पादद्वयमपि विपरिणमय्य ग्रन्थमारचयेदिति। अधीते तु ग्रन्थेऽध्ययनात्प्रागेव गौरवधियोऽङ्कुरितत्वादुपपद्यते तदालम्बनप्रवृत्तिः। अस्य प्रणेता जयदेवकविः श्रीगीतगोविन्दकाव्यकर्तुरन्य एव मिथिलाभिजनश्चेति वदन्ति। पायगुण्डेकृतव्याख्यानात्प्राचीनानि द्वित्राण्यस्य व्याख्यानानि सन्तीति रमाभिधायामस्यां कतिपयेषु स्थलेषु मतान्तरेण व्याख्यान्तरोपन्यासादवगम्यते। तथाहि पृ० ८ (म. १ श्लो० १०) एतेन तात्पर्यविषये इति अत्रापि विशेषणमित्यपास्तम्; यत्तु—तन्नेत्यादि। पृ० ९ (म. १ श्लो० १२) एक एवायमिति प्राचः प्रमादः; परिवर्तनमुपस्थितिरिति व्याख्या त्वक्षराननुगुणा। तथा तत्रैव (श्लो० १३) जलाधिष्ठानत्वादौ विशेषव्यवहारः समुद्रत्वादौ सामान्यव्यवहारश्च प्राचो लोकविरुद्धः। पृ० २२ (म. २ श्लो० ३१) केनोपमीयत इति निषेधोऽनुपपन्न इति कश्चित्। पृ० ४५ (म. ५ श्लो० २१) अत्र पद्ये एक एवालंकारो लक्ष्य इति प्राचः प्रमाद एव, अङ्गयष्टिरित्यादेर्द्विरुपादानासङ्गतेः। तत्रैव (श्लो० २२) यत्तु शरदागमकृत्। पृ० ७७ (म. ५ श्लो० १२१) मालेति पद्यमलग्नकत्वात्कैश्चित्त्यक्तं तदसत्, सुयोजत्वात्। इत्यादि। व्याख्याबाहुल्यमप्यस्याध्ययनप्रचारं विद्वत्समादरपात्रत्वं च प्रत्याययति।

अयं च टीकाकृद्वैद्यनाथभट्टः शब्देन्दुशेखरादिनानानिबन्धप्रणेतुर्नागेशभट्टस्य शिष्यः। अनेन शब्देन्दुशेखरे चिदस्थिमाला, परिभाषेन्दुशेखरे गदा, शब्दरत्ने भावप्रकाशिका, महाभाष्यप्रदीपोद्योते छाया, व्याकरणसिद्धान्तमञ्जूषायां कला, याज्ञवल्क्यमिताक्षरायां लक्ष्मी-

SGDF
Sri Gargeshwari Digital Foundation

नाम्नी, चन्द्रालोके रमाभिधा चेति व्याख्याः प्रणीताः लोकेषु प्रसिद्धाः। अयं लोकेषु बाळंभट्ट इतिनाम्ना प्रथित इति ताः सर्वा अपि बाळंभट्टीनाम्ना व्यवह्रियन्ते। एतत्कृतं 'वाममार्गखण्डनम्' अस्माभिरुपलब्धं तदपि यथावसरं प्रकाशयिष्यामः।

अस्य सटीकचन्द्रालोकस्य मुद्रणारम्भश्चत्वारिंशद्वत्सरेभ्यः प्राग्वाराणस्यां मुद्रितमेकं पुस्तकमासाद्य कृतः। तद्यद्यप्यापाततो दर्शने शुद्धमिव प्रतिभाति तथाप्यर्थविचारणावसरेऽनल्पेषु स्थानेषु मूले श्लोकभ्रंश–टीकाननुगुणपाठादिभिः, टीकायां च वर्णलोप–पदलोप–वाक्यखण्डलोपैराकृतिकृतसादृश्यशून्यवर्णान्तरभावापत्त्या च क्रमेण द्वित्रिषु त्रिचतुरेषु क्वचित्पञ्चषेष्वपि वर्णेषु, भूयान्क्लेशोऽन्वभावि। एतन्मुद्रणालयस्थसंस्कृतग्रन्थसङ्ग्रहे चन्द्रालोकस्य लिखितं पुस्तकमेकमुपलब्धं यस्मिन्पायगुण्डेकृतटीकात एवोद्धृत्य कतिचित्पङ्क्त्यष्टिप्पनीरूपेण पङ्क्तीनामन्तराले परितश्च यथावकाशमालिखिताः, पाठाश्च टीकाकृदुररीकृता एव सन्ति। एतदत्र बहुतरमुपयुक्तम्। एवं सरस्वतीकण्ठाभरण–काव्यप्रकाश–काव्यप्रदीपानामपि टीकाशोधने कृतमालम्बनम्। एवं परिशोधितेऽपि प्रमादादिजनितास्तथाक्षरयोजकादिकृता यन्त्रस्यातिवेगवशादनुस्वाररेफादिभङ्गजनिताश्च दोषाः सुधीभिः क्षन्तव्या इति शम्।

बाक्रे इत्युपाह्वो–महादेवशर्मा.

SGDF
Sri Gargeshwari Digital Foundation

# चन्द्रालोकालङ्कारस्थविषयानुक्रमः ।



SGDF
Sri Gargeshwari Digital Foundation

SGDF
Sri Gargeshwari Digital Foundation

SGDF
Sri Gargeshwari Digital Foundation

## षष्ठो मयूखः ।



## सप्तमो मयूखः ।



## अष्टमो मयूखः ।



## नवमो मयूखः ।



## दशमो मयूखः ।



इति चन्द्रालोकालंकारस्थविषयानुक्रमः समाप्तः ।



SGDF
Sri Gargeshwari Digital Foundation



SRI ... PURA
BANGALORE CITY
VEDA MAHA PATHASALA


श्रीपीयूषवर्षजयदेवकविविरचितः

58

# चन्द्रालोकः ।

FORT, BANGALORE.

पायगुण्डोपाह्ववैद्यनाथविरचितरमाख्यव्याख्यासहितः ।

## प्रथमो मयूखः ।

उच्चैरस्यति मन्दतामरसतां जाग्रत्कलङ्कैरव-
ध्वंसं हस्तयते च या सुमनसामुल्लासिनी मानसे ।
दुष्टोद्यन्मदनाशनार्चिरमला लोकत्रयीदर्शिका
सा नेत्रत्रितयीव खण्डपरशोर्वाग्देवता दीव्यतु ॥ १ ॥

---

वृन्दावने खेलति राधिकासमं
कर्णावतंसीकृतफुल्लपद्मः ।
रहः समालम्ब्य शरत्सुधांशुः
कलङ्कितामाप स पातु माधवः ॥ १ ॥

नत्वा गुरुं वैद्यनाथः पायगुण्डेतिकीर्तितः ॥
व्याख्यां रमाख्यां तनुते चन्द्रालोके विलासिनीम् ॥ २ ॥

ग्रन्थसमाप्त्यादिप्रतिबन्धकशमनाय स्वेष्टदेवतातिरिक्तदेवताकमङ्गलस्य निषिद्धतया सकलमूलभूतत्वेन समुचिततया च श्रीमद्वाग्देवतावस्तुनिर्देशादिरूपं मङ्गलमाचरञ्जयदेवनामा कविः शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—उच्चैरिति । सा प्रसिद्धा वर्णनीया वा वाग्रूपा देवता दीव्यतु सर्वोत्कर्षेण वर्ततां क्रीडतां मोदतां वेत्यन्वयार्थौ । भक्तवदने इति शेषः । केव खण्डपरशोर्गदासुरवधे खण्डो भग्नः परशुर्यस्य, खण्डयतीति खण्डः परशुर्यस्येति वा । तादृशस्य शिवस्य नेत्रत्रितयीव त्रयोऽवयवा यस्याः सा त्रितयी नेत्राणां त्रितयी नेत्रत्रितयी सूर्यचन्द्राग्निरूपनेत्राभिन्नत्र्यवयवकसमूह इवेत्यर्थः । तत्र कीदृग्वाग्देवता, यद्वा सा का एवमग्रेऽपि । या मन्दतां मूर्खतामरसता च निर्हर्षतां नीरसतां वा

SGDF
Sri Gargeshwari Digital Foundation

रलयोरैक्यादलसतां वा उच्चैरूर्ध्वं दूरे इति यावत् ऊर्ध्वत्वस्याविवक्षितत्वात् । अस्यति क्षिपति 'असु क्षेपणे' दिवादिः । सुमनसामिति काकाक्षिन्यायेनोभयत्र संबध्यते । अत एतदुक्तिः । तथाच या सुमनसां पण्डितानां रवानां शब्दानां वचनानामिति यावत् । तेषां यः ध्वंसः अभावः जाग्रद्भिन्नकलङ्कहेतुकस्तं हस्तयते च हस्तेनातिक्रामति दूरीकरोति चेत्यर्थः । तस्याः प्रसादेन तेषां निर्दुष्टवचनप्रयोगः सुकरः । अन्यथा दुष्टवाङ्निस्सरणभीत्या वचनाभाव इति भावः । केचित्तु जाग्रत्यः कलाः अस्य, जाग्रत् कलो मन्दगम्भीरः शब्दोऽस्य वा सः पूर्वविशेषणे मन्दत्वादिनाशात्तादृशं पुरुषं हस्तयते हस्तेन स्पृशति हस्तगतं वा करोतीत्यर्थः । किंभूतं, कैरपि पुरुषैर्न वध्वंसो यस्य सः तम् । भागुरिमतेन वध्वंसशब्दः साधुरित्याहुः । पुनः कीदृक् या सुमनसां पण्डितानां मानसेऽन्तःकरणे उल्लासिनी उल्लसनशीला । पुनः या दुष्टानामुद्यन्यो मदस्तस्य नाशनं भस्मादीदशम् अर्चिरस्याः सा । यद्वा तादृशमदस्य नाशकमर्चिर्यस्याः सा । यद्वा तादृशमदस्य नाशने अर्चिरेव । यद्वा दुष्टत्वमभेदेन मदविशेषणमर्चिर्ज्वालेवेत्यर्थः । धृष्टोद्यन्निति पाठे धृष्टा उद्यन्मदाः विना ज्ञानं महागर्वभाजः अग्रे प्राग्वत् । पुनः अमला निर्मला अत एव लोकत्रयीदर्शिका भूर्भुवःस्वारूपलोकाभिन्नान्यवयवकसमूहदर्शनकर्त्रीत्यर्थः । तद्वर्णनक्षमेति यावत् । केचित्त्वमलेत्यन्तमेकं पदमाहुरिति वाग्देवीपक्षे । नेत्रत्रितयीपक्षे मन्दानि निष्प्रभाणि च तानि तामरसानि कमलानि च मन्दतामरसानि तेषां भावः मन्दतामरसता ता कमलनिष्ठमन्दत्वं संकुचितत्वं दूरे क्षिपतीत्यर्थः । एतेन सूर्यमयत्वं सूचितं तस्य पद्मविकासकत्वादिति भावः । पुनः सुमनसां पुष्पाणां मध्ये के जले रौतीति केरवो हलदन्तादिति तत्पुरुषे कृतीति वा सप्तम्या अलुक् । हंसस्तस्येदं प्रियं कैरवं कुमुदं तस्य ध्वंसं नाशं जाग्रत्यः स्फुरन्त्यः कला यस्मिन्कर्मणि यथा भवति तथेति पूर्वोक्तक्रियाविशेषणम् । अत एव मध्ये तदुक्तिः । तथा च तद्यथा यथा हस्तयते हस्तेनातिक्रामति । एतेन चन्द्रमयत्वं सूचितं, तस्य तद्विकासकत्वात् । पुनः या च सुमनसां देवानां पण्डितानां वा मानसे अन्तःकरणे उल्लसनशीलाः । एतेनापि चन्द्रमयत्वं सूर्यमयत्वं वह्निमयत्वं वा सूचितम् । चन्द्रेण देवानां तृप्तिजननात्तस्य दर्शनीयत्वाच्चेनोदये कर्माचरणात्तस्यापि तत्त्वाच्च । अन्वहमग्नेरुपास्यत्वात्तथा तदाधानस्य श्रुत्युक्तत्वाच्च । यद्वा एतद्विशेषणेन विवक्षितार्थपुष्टिः । एतद्विना तद्देवतासंभवात् । अत एव पूर्वकल्पेपि विशेषणं सार्थकम् । पुनः

SGDF
Sri Gargeshwari Digital Foundation

हं हो चिन्मयचित्तचन्द्रमणयः संवर्धयध्वं रसान्
रे रे स्वैरिणि निर्विचारकविते मास्मत्प्रकाशीभव ।
उल्लासाय विचारवीचिनिचयालंकारवारांनिधे-
श्चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती ॥ २ ॥

---

दुष्टः उद्धन्यः मदनः मारः तस्याशनं भस्मादीदृशमर्चिर्यस्याः सा । एतेनाग्निमयत्वं सूचितं, तद्रूपनेत्रस्य मदनदाहकत्वात् । अत एवामलाः अत्रापि पूर्ववद्बोध्यमिति केचित् । अत एव लोकत्रयीदर्शिकेति समुदायविशेषणं पूर्वाणि तु प्रत्येकद्वाराणीति बोध्यम् ॥ १ ॥

प्रयोजनानि सूचयन् स्वादिकीर्तये नामनी च निबध्नञ्छिष्यावधानाय प्रतिजानीते—हं हो चिन्मयेति । इतरसाहित्यग्रन्थापेक्षयाऽस्याधिक्यं सूचयन् कवितायाः प्रयोजनान्यथासिद्ध्या वैयर्थ्यं प्रतिपादयति—चिन्मयेत्यादिना । हं हो इतिपदद्वयं तत्र हमित्यनुनये 'हं रोषभाषणेऽनुनयेऽपि च' इति हैमोक्तेः । 'हं रुषोक्त्यनुनीतिषु' इतिविश्वप्रकाशोक्तेश्च । हो इति संबोधने । 'होहै तु भोऽत्संबुद्ध्याह्वानयोर्मतौ' इति तदुभयोक्तेः । हे चिन्मयचित्तचन्द्रमणयः चित्प्रचुराणि चैतन्याश्रयाः एतेन जडत्वनिरासः, तस्य रसासंबद्धकत्वात् तदुक्तिवैयर्थ्यापत्तेश्च । ईदृशानि यानि चित्तान्यन्तःकरणानि तद्रूपा ये चन्द्रमणयः चन्द्रकान्तशिलामणयः । यद्वा ज्ञानप्रचुरास्तद्रूपा वा ये मनोरूपचन्द्रकान्तमणयः । यद्वा तेषां ये तद्रूपाः ते इत्यर्थः । यूयं तान् शृङ्गारादीन् संवर्धयध्वं तन्मणीनामपि जलरूपरससंवर्धकत्वात् । हे निर्विचारकविते त्वमस्मत्प्रकाशीभव मा । अस्मत् अस्मत्तः प्रकाशो यस्याः सास्मत्प्रकाशा अनस्मत्प्रकाशा (अस्मत्प्रकाशा) संपद्यते तथा भवेत्यस्मत्प्रकाशीभवेत्यर्थः । स्वकवितायां स्वभावतो निर्विचारत्वासत्त्वात् च्विः । यतः स्वैरिणि स्वेच्छाचारशीले नानाजनसाधारणे अत एव निर्विचारे निर्गतः विचारः वासयोग्यपात्ररूपो यस्याः । अत एव रे इति नीचसंबोधनद्योतकं, तत्राप्यतिशयद्योतनार्थं वीप्सा । उभयत्र हेतुमाह—चन्द्रेति । यतः अयं प्रसिद्धः कृती पुण्यवान्कुशलः पण्डितो वा पीयूषवर्षः पीयूषाणि वर्षति स चन्द्रः तन्नामकः जयदेवश्च स्वयं इतरनिरपेक्षेण तादृशकवितानिरपेक्षेण च चन्द्रसंबन्ध्यालोकं तन्नामकं ग्रन्थं च विशेषेण तनुते न तु विस्तारमात्रं, चन्द्रोदये चन्द्रमणीनां क्षरणात् कृष्णाभि-

SGDF
Sri Gargeshwari Digital Foundation

युक्त्यास्वाद्यलसद्रसैकवसतिः साहित्यसारस्वत-
क्षीराम्भोधिरगाधतामुपदधत्सेव्यः समाश्रीयताम् ।
श्रीरस्मादुपदेशकौशलमयं पीयूषमस्माज्जग-
ज्जाग्रद्धासुरपद्मकेशरयशःशीतांशुरस्माद्बुधाः ॥ ३ ॥

---

सारिकागत्यभावाच्चेति भावः । नन्वितरग्रन्थसत्त्वे किमपूर्वोऽयं ग्रन्थः क्रियत इत्यत आह—उल्लासेति । विचाररूपस्तरङ्गसमूहो यस्य ईदृशो योऽलङ्काररूपः सागरस्तस्योल्लासपुष्टये इत्यर्थः । वारांनिधिरित्यत्र " तत्पुरुषे कृति " इति बहुलग्रहणात्षष्ठ्या अलुक् । चन्द्रेण स्वालोकविताने कृते यथोदधेर्वृद्धिस्तथैतद्ग्रन्थे जयदेवेन कृते सत्यलङ्काराणां पुष्टिः सा च न ग्रन्थान्तरे इत्ययं सफल इति भावः । यद्यप्यत्रालङ्कारातिरिक्ता अपि प्रतिपाद्यन्ते तथापि तेषां बाहुल्येन प्रतिपादनीयत्वेन प्राधान्यादुल्लेखः । एवं चालङ्कारादयो विषयास्तद्व्युत्पत्तिः प्रयोजनं प्रतिपाद्यप्रतिपादकभावः संबन्धस्तज्जिज्ञासुरधिकारीति सूचितम् ॥ २ ॥

नन्वेतद्ग्रन्थकरणस्य तदुल्लासरूपप्रयोजनसत्त्वेऽपि एतदध्ययनस्य निष्प्रयोजनत्वात्पुरुषाणामप्रवृत्तिरत्र ग्रन्थे स्यात् । नचालंकारादिव्युत्पत्तिः फलं, तस्याः स्वतोऽपुरुषार्थत्वात् । अतः सामान्यतोऽलंकारशास्त्रप्रयोजनकथनद्वारा अत्र पण्डितप्रवृत्त्यौपयिकमेतदध्ययनस्य फलं, तादृशं दर्शयति—युक्त्येति । हे बुधाः पण्डिताः देवाश्च साहित्यमलंकारशास्त्रं तत्संबन्धिनी या सरस्वती तत्संबन्धि यत् क्षीरमेतच्चन्द्रालोकाख्यग्रन्थरूपं तद्रूपः सागरः । यद्वा साहित्यसंबन्धि सारस्वतं वाङ्मयं तदेव क्षीरं तस्योदधिरयम् । यद्वा साहित्याभिन्नवाङ्मयाभिन्नक्षीरसागरोऽयं सम्यक् अध्ययनाध्यापनावलोकनादिरूपमथनादिना आश्रीयतां न तु यथाकथंचित् । तत्र हेतुगर्भं विशेषणं सेव्य इति । यतः युष्मत्संबन्धिसेवनाश्रयः शनैर्गन्तुं पक्षे बोद्धुं योग्यः चर्वणास्वाद्य इत्यर्थः । तत्र सहेतुकं विशेषणमगाधतां निम्नतां गभीरतां गूढाशयतां च बिभ्रत् । यत इति शेषः । ग्रन्थान्तराऽपेक्षयाऽत्र गाम्भीर्यमिति भावः । तत्रापि हेतुगर्भविशेषणं युक्त्येति । यतो युक्तिभिरुपायैर्न तु यथाकथंचित् साधकबाधकप्रमाणोपन्यासैश्च आस्वाद्याः आस्वादयितुं योग्याः सादरं ज्ञानयोग्याश्च ये लसन्त उत्तमाः न तु ग्रन्थविस्तरमात्रजनकाः मलिनाश्च रसाः शृङ्गारादयः

SGDF
Sri Gargeshwari Digital Foundation

तं पूर्वाचार्यसूर्योक्तिज्योतिस्तोमोद्गमं स्तुमः ।
यं प्रस्तूय प्रकाशन्ते मद्गुणास्त्रसरेणवः ॥ ४ ॥

---

जलानि च विपादयो(?)रत्नानि वा हर्षादयो वा तेषामेका मुख्या असहाया वा वसतिर्वासस्थानमित्यर्थः । यद्वा युक्त्येति तृतीयान्तमास्वाद्येति ल्यबन्तं क्रियान्वितं सा च समाश्रयणे अन्वेति । यद्वा युक्तिश्चास्वाद्यलसद्रसश्च तयोरेका वसतिः । युक्तिश्च समाधिः पूर्वोक्तरूपा च अन्यत्रालंकारग्रन्थे युक्तिर्नास्तीत्यर्थः । अतः अगाधत्वेन सेव्यत्वात्समाश्रयणं युक्तमिति भावः । तस्य फलमाह—श्रीरित्यादि । हे देवाः पण्डिताश्च अस्माद्ग्रन्थरूपात्सागरात् श्रीः लक्ष्मीः समाश्रीयतामित्यन्वयः । अत एवान्तरा तदुक्तिः । भवतीत्यध्याहारेण तु व्याख्यानं निष्फलं, तत्र मथनाल्लक्ष्मीप्राप्तिः सरससेवनेन कान्तिप्राप्तिश्च अत्राधीततद्ग्रन्थात्संतोषितराजादित इति भावः । अन्यच्च अस्मात्पूर्वोक्तादुपदेशः परस्य बोधनं तथा चान्येषां गुरुरपि स्वयं भवति उपदेशकौशलस्य पीयूषत्वेन शिष्याणां प्रवृत्तिः कान्तासंमितोपदेशत्वं च व्यज्यते । ब्रह्मविद्या वा, तत्र यत्कौशलं कुशलत्वं तत्प्रचुरं पीयूषममृतं तद्रूपं वचश्चेति कर्म क्रिया पूर्ववत् । अपरं च अस्माज्जगति न तु तदेकदेशे, जाग्रद्विकसितं भासुरं देदीप्यमानं पद्मकिञ्जल्कवद्यद्यशः तद्रूपः शीतांशुश्चन्द्रः न तूष्णांशुरुदासीनश्चेति पूर्ववत् । यद्वा जगदेव तादृशं पद्मं तस्य केसरं प्रसूनत्वेन तद्वद्यशस्तद्रूपश्चन्द्र इति । जाग्रद्भासुरेति पद्मयशःशीतांशूनां विशेषणं तन्त्रेण । अत एव प्राक्तदुत्कीर्तनम् । तथा चान्यग्रन्थतो यशश्चन्द्रोऽपि एतत्सेवने सम्यग्भवति । तथाचार्थोपदेशयशःफलककाव्यज्ञानप्रयोजनकग्रन्थेऽत्र प्रवृत्तिरुचितेति भावः । अन्यदपि प्रयोजनं काव्यप्रकाशादौ स्पष्टमिति बोध्यम् ॥ ३ ॥

संप्रति कविः स्वाहंकारं परिहरति—तमिति । वयं तं पूर्वे प्राचीनाः ये आचार्यास्ते सूर्या इव तेषां ज्योतिःसमूहतुल्या या उक्तयः वचांसि तेषामुद्गमं प्रसरणं स्तुमः । तं कं, यं संश्रित्य सम्यक् श्रित्वा मद्गुणाः त्रसरेणव इव प्रकाशन्ते प्रकटीभवन्ति । त्रसरेणवः सूर्योदये सति गवाक्षादिमार्गेण प्रविष्टेषु तत्किरणेषु प्रकाशन्ते यथा तथा मद्गुणास्तदाश्रयेणैव प्रकाशन्ते न तु स्वतः । असंज्ञात्वान्न षः । यद्वा उक्तिज्योतिषोरेवोपमानोपमेयभावः । तदुक्तिदर्शनाभ्यासेनैव मम सामर्थ्यमिति भावः ॥ ४ ॥

SGDF
Sri Gargeshwari Digital Foundation

नाशङ्कनीयमेतेषां मतमेतेन दूष्यते ।
किं तु चक्षुर्मृगाक्षीणां कज्जलेनेव भूष्यते ॥ ५ ॥
प्रतिभैव श्रुताभ्याससहिता कवितां प्रति ।
हेतुर्मृदम्बुसंबद्धा बीजमाला लतामिव ॥ ६ ॥
निर्दोषा लक्षणवती सरीतिर्गुणभूषणा ।
सालंकाररसानेकवृत्तिर्वाक्काव्यनामभाक् ॥ ७ ॥

---

नन्वेतद्ग्रन्थस्य स्वकल्पितत्वे प्राचीनविरुद्धत्वेनानुपादेयत्वमन्यथा एतस्य दोषयुक्तत्वेनैतद्दोषेण तेषामपि दुष्टत्वापत्तिश्चेत्यत आह—नाशङ्कनीयमिति । पूर्वेषां प्राचीनानां मतं सिद्धान्तः एतेन ग्रन्थेन दूष्यते दोषयुक्तः क्रियते इति नेत्यादि । तथा च मलिनवदाभासमानाया अपि स्वोक्तेः प्राचीनोक्तिपरिष्कारकत्वेनोपादेयत्वमदुष्टत्वं चेति भावः । वस्तुतस्तु पूर्वाचार्यमतखण्डकतयाऽऽपाततो भासमानापि मदुक्तिर्नानुचितेत्याह—नाशङ्केति । दोषदानेन विचारकाणां तत्र सिद्धान्ते द्राक् स्फूर्त्युदयादिति भावः ॥५॥

काव्यबीजमाह—प्रतिभैवेति । श्रुतं साङ्गवेदशास्त्रादि अष्टादशात्मकं तस्य श्रवणं तस्य परिशीलनान्निपुणता अभ्यासः काव्यज्ञशिक्षाकृतः ताभ्यां सहिता युक्ता प्रतिभैव नवनवोन्मेषशालिबुद्धिविशेषः । एवकारेणेतरसमकक्षव्यवच्छेदः । कवितां प्रति तत्सामान्यं प्रति हेतुः, मृज्जलसंयुक्ता बीजमाला लतां प्रति यथा हेतुरित्यर्थः । बीजव्यक्तिरिति पाठे तद्रूपा व्यक्तिरित्यर्थः सुगमः । क्वचित्तु बीजस्य फलतामिवेति पाठः । तत्र बीजस्य फलता तद्रूपता अङ्कुरितरूपतेति यावत् । तां प्रति यथा हेतुर्जलेन युक्ता मृदित्यर्थः । अत्रेदं बोध्यं प्रतिभादीनां दण्डचक्रादिन्यायेन कारणता न तु तृणारणिमणिन्योयन अत एव हेतुरित्युक्तं न तु हेतव इति । स्पष्टं चेदं प्रकाशादौ । एतेन क्वचित्प्रतिभायाः क्वचिददृष्टस्य हेतुत्वं वैजात्यनिवेशान्न व्यभिचार इत्यपास्तम् । ग्रन्थकृदसंमतत्वादन्यथोक्तिरप्यफला स्यादिति ॥ ६ ॥

काव्यलक्षणमाह—निर्दोषेत्यादि । तत्रादौ त्याज्यतयाह—निर्दोषेति । दोषाः स्याच्चेतोवीत्यादिना वक्ष्यमाणाः । तन्निरुक्तिरपि तत्रैव वक्ष्यते । दोषसामान्याभावोऽत्र विवक्षितः । काव्यत्वं चाव्याप्यवृत्तीति भावः । लक्षणानि अक्षरसंहतिरित्यादिना वक्ष्यमाणानि । रीतयः पाश्चाल्यादयस्त-

SGDF
Sri Gargeshwari Digital Foundation

अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ॥ ८ ॥
विभक्त्युत्पत्तये योग्यः शास्त्रीयः शब्द इष्यते ।
रूढयौगिकतन्मिश्रैः प्रभेदैः स पुनस्त्रिधा ॥ ९ ॥

---

था । एव मग्रेऽपि । गुणाः श्लेषादयस्तैर्भूषणा भूष्यमाणा राजभोजनाः शाल्य इतिवत्कर्मणि ल्युट् । अलंकारा उपमादयः । रसाः शृङ्गारादयः । वृत्तयः......शक्त्यादयश्च । अत एवानेकत्वमत्रैव विशेषणं नान्यत्र । तेषां प्रत्येकमनेकत्वं च स्वत एव ज्ञेयम् । ईदृशि वाचि शब्दे काव्यपदवाच्यत्वमित्यर्थः । एतेन उक्तधर्मविशिष्टशब्दनिष्ठमेव काव्यत्वं, काव्यं करोतीति प्रयोगस्य तत्रैव दर्शनादिति सूचितम् । ननु शब्दार्थयोर्व्यासज्यवृत्ति काव्यत्वमिति प्रकाशादिः । शब्दप्राधान्ये सार्थशब्दवृत्तिः, अर्थप्राधान्ये विपरीतमित्यन्ये । तत्कथमत्र सर्वथाऽर्थस्य त्याग इति चेन्न, निर्दोषत्वेनैवार्थवत्त्वलाभान्निरर्थकस्य दुष्टत्वाद् । इतोऽपि हेतोस्तस्य प्रागुपादानम् । वैपरीत्यं तु नेष्टमुक्तहेतोरिति दिक् ॥ ७ ॥

प्रकाशोक्तिसमर्थनं सूचयितुमुपहासद्वारा तामापाततो दूषयति—अङ्गीति । योऽनलंकारौ शब्दार्थौ काव्यमित्यूरीकरोति असौ कृती पण्डितः अनुष्णमग्निं कुतो न मन्यते इत्यर्थः । वचनभेदेऽप्यभेदान्वयस्य बहुशो दृष्टत्वान्नानुपपत्तिः । अलंकाररहितयोः शब्दार्थयोः काव्यत्वाङ्गीकारकर्तुरुष्णत्वरहितस्योष्णाग्नित्वाङ्गीकारो युक्तः स्यात् । नचैवं प्रत्यक्षेण दृश्यते इत्युपहासः । अलंकारादियुक्तमेव काव्यं तस्य तु क्वचिदस्फुटत्वेऽपि न काव्यत्वहानिरिति तत्तत्त्वमिति भावः ॥ ८ ॥

काव्यत्वस्य तादृशवाङ्निष्ठत्वात्तद्घटकशब्दस्य विशेष्यस्य निर्दोषत्वादिविशेषणसङ्क्रमनाय दोषादीन्निरूपयितुं पदादिभेदान् सलक्षणान्वक्तुं पदघटकशब्दे भेदान्वक्तुं तल्लक्षणमाह—विभक्त्युत्पेति । सुप्तिङ्प्रत्ययोत्पत्तियोग्यः धातुप्रातिपदिकान्यतरप्रकृतिभागः तस्यैव तत्त्वात्सः शास्त्रीयस्तत्कल्पितः साधुर्बोधकः शब्द इष्यत इत्यर्थः । तथा च शास्त्रीयशब्दत्वं लक्ष्यतावच्छेदकं तेन भेरीशब्दादौ नाव्याप्तिः । सः शब्दः रूढयौगिकयोगमिश्रितरूढिकैः प्रभेदैस्त्रिधेत्यर्थः । पुनरिति वाक्यालंकारे त्वर्थे वा । तत्र समुदायमात्रशक्त्या अर्थप्रत्यायको रूढः । अवयवमात्रशक्त्या-

SGDF
Sri Gargeshwari Digital Foundation

अव्यक्तयोगनिर्योगयोगाभासैस्त्रिधाऽदिमः ।
ते च वृक्षादिभूवादिमण्डपाद्या यथाक्रमम् ॥ १० ॥
शुद्धतन्मूलसंभिन्नप्रभेदैर्यौगिकस्त्रिधा ।
ते च भ्रान्तिस्फुरत्कान्तिकौन्तेयादिस्वरूपिणः ॥ ११ ॥

---

ऽर्थप्रत्यायको यौगिकः । अवयवशक्त्या समुदायशक्त्या चैकार्थप्रत्यायको योगरूढ इति ध्येयम् ॥ ९ ॥

अत्राद्यस्य भेदत्रयमाह—अव्यक्तेति । आदिमः आद्यः । अग्रिम इति पाठेऽप्येवम् । संभवदवयवार्थस्याव्यापकत्वेनास्फुटत्वेनाननुसंधानेऽपि समुदायमात्रशक्त्याऽर्थप्रत्यायकत्वमव्यक्तयोगत्वम् । अवयवार्थाभावो निर्योगत्वम् । तात्पर्यविषयेऽनन्वितभासमानावयवार्थत्वं योगाभासत्वमित्यर्थः । एतल्लक्ष्याण्याह—ते चेति । ते च अव्यक्तयोगादयो यथाक्रमं वृक्षादयो बोध्या इत्यर्थः । अत्र बहुव्रीहीणां त्रयाणां द्वन्द्वः । तत्राद्ये वृश्चत्यातपमिति संभवतोऽपि योगस्योक्तरीत्या न प्रतीतिः किंतु सर्वत्र वृक्षत्वजातिप्रतीत्या समुदायशक्तिप्रतीतिः । तथा चोक्तलक्षणसंगतिः । द्वितीये सत्तायां भूधातोः सत्त्वेऽपि तत्र योगासंभव एव । यद्यपि तत्कर्त्रादौ योगः संभवति तथापि तस्यात्रालक्ष्यत्वमेवेदमेव ध्वनयितुं सूत्रैकदेशभूवादीत्युक्तम् । तत्र हि धातोरेवानुकरणमित्यन्यसंभावनैव न । एतेन 'तात्पर्यविषये' इति, अत्रापि विशेषणमित्यपास्तम्, उक्तयुक्तेः तृतीयतो वैलक्षण्यानापत्तेश्च । आदिभ्यां प्रत्ययशब्दादिचादिग्रहः । यत्तु भूवादय इति सूत्रस्थं समुदितं लक्ष्यं तच्च पाणिनिरूढ्या भूप्रभृतिसर्वधातुप्रतिपादकम् । भूशब्देन भूवाशब्देन वा बहुव्रीहौ योगसंभवस्तु न, आद्ये भ्वादय इत्यापत्तेः अन्त्ये धातुषु तदादित्वासंभवादिति । तन्न, तस्य यौगिकत्वस्यैव तन्त्रान्तरे स्पष्टत्वात् । तृतीयेऽन्यत्र भासमानमण्डपानकर्तृत्वरूपयोगार्थान्वयसंभवेऽपि तात्पर्यविषये गृहरूपेऽर्थे तदसंभव इत्यर्थः ॥ १० ॥

यौगिकोऽपि त्रिधेत्याह—शुद्धेति । शुद्धयौगिकः यौगिकमूलयौगिकः संभिन्नयौगिकश्चेति संभिन्नान्तभेदैः स त्रिधेत्यर्थः । तत्र योगशून्यप्रकृतिप्रत्यययोगेनार्थप्रत्यायकत्वं शुद्धयौगिकत्वम् । तादृशयौगिकयोर्योगेन समासेनार्थप्रत्यायकत्वं योगिकमूलयौगिकत्वम् । यौगिकायौगिकयोर्योगेनार्थप्रत्यायकत्वं संभिन्नयौगिकत्वमिति बोध्यम् । एतल्लक्ष्याण्याह—ते चेति ।

SGDF
Sri Gargeshwari Digital Foundation

तन्मिश्रोऽन्योन्यसामान्यविशेषपरिवर्तनात् ।
नीरधिः पङ्कजं सौधं सागरो भूरुहः शशी ॥ १२ ॥
क्षीरनीरधिराकाशपङ्कजं तेन सिध्यति ।
विभक्त्यन्तं पदं वाक्यं तद्व्यूहोऽर्थसमाप्तितः ॥ १३ ॥

---

वाक्यार्थः प्राग्वत् । स्वरूपपरभ्रान्त्यादिशब्दानां द्वन्द्वगर्भितबहुव्रीहिगर्भितकर्मधारयप्रकृतिक इनि नीलरूपवदितिवत्प्रयोगः । तत्राद्ये भ्रमुधातोर्गतिभ्रमोभयवाचकत्वस्योक्तत्वेऽपि केवलप्रकृतेरप्रयोगेण ततस्तदर्थाबोधेन तादृशप्रकृतिप्रत्यययोगादेव तयोर्बोध इति लक्षणसङ्गतिः । द्वितीये कमजक्तिन्नन्तस्फुरजशत्रन्तयोः कान्तिस्फुरत्पदयोः शुद्धयौगिकयोः समासेन तत्संबन्ध्यर्थान्तरप्रतीतिरिति । तथा तृतीयेऽपि राजादिवाचिकुन्तिशब्दात्तद्धितलुकि ङीषि यौगिककुन्तीशब्दस्यायौगिकतद्धितयोगेन निष्पन्नकौन्तेयपदस्यार्जुनादिबोधकत्वात्तथेति बोध्यम्।आदिना पाचकादिपरिग्रहः॥११॥

योगरूढस्यापि त्रैविध्यमाह—तन्मिश्र इति । सामान्यविशेषयोर्धर्मयोः कचित्प्रतीयमानयोरन्योन्यं मिथो यत्परिवर्तनं विनिमयः कचित्तस्मादयं तन्मिश्रोऽपि त्रिधेत्यनुषङ्गेण त्रिधैवेत्यर्थः । एक एवायं भेद इति तु प्राचः प्रमादः, भेदसंभवात् । अत एव हेतूक्तिः । कचिद्योगस्थाने रूढेरेवाश्रयणं कचिद्रूढिस्थाने योगस्यैव कचिदुभयसत्त्वमिति फलितम् । अन्योन्यौ भिन्नौ मिलितौ वा, परिवर्तनमुपस्थितिरिति व्याख्या तु अक्षरस्वरसाननुगुणा इष्टासाधिका च । एतल्लक्ष्याण्याह—नीरधिरित्यादि । नीरध्यादिपदात् जलाधिष्ठानत्वपङ्कजनिकर्तृत्वसुधानिर्मितत्वभूजातत्वशशधरत्वादिसामान्येन समुद्रत्वपद्मत्वगृहत्ववृक्षत्वचन्द्रत्वादिविशेषेण च रूपेण कचिदुपस्थितावपि कचिदन्यतरत्यागेनान्यतराश्रयणं कचिदुभयप्रकारकबोधेऽपि कचिदन्यतरप्रकारकबोध एव कारणवशेनाङ्गीकार्य इति भावः ॥ १२ ॥

तत्र सामान्यपरिवृत्तेः फलमाह—क्षीरेति । तेन विशेषस्य सामान्येन परिवर्तनेन । अन्यथाऽत्र सामान्यरूपेणाप्युपस्थितौ क्षीरेत्यनन्वितं स्यात् । जलाधिष्ठानत्वादौ विशेषव्यवहारः समुद्रत्वादौ सामान्यव्यवहारश्च प्राचो लोकविरुद्ध इति स्पष्टम् । एवं क्षीरसागरपदेऽपि तथोपस्थितौ तदनन्वयः । एवं सुरभूरुहः निष्कलङ्कः शशीत्यत्र तथोपस्थितौ सुरादेरनन्वयः । एवं

SGDF
Sri Gurgeshwari Digital Foundation

युक्तार्थाना तां च विना खण्डकाव्यं स इष्यते ।
वाक्यं च खण्डवाक्यं च पदमेकमपि क्वचित् ॥ १४ ॥
धूमवत्त्वादिति यथा देवेत्यामन्त्रणं यथा ।
वाक्यान्येकार्थविश्रान्तान्याहुर्वाक्यकदम्बकम् ॥ १५ ॥

---

स्वर्गपङ्कजं कलधौतसौध इत्यत्रापि बोध्यम् । आकाशपङ्कजमित्यस्य तु अयमाशयः । यद्यपि पद्मस्येव चन्द्रस्यापि नाकाशप्रभवत्वं तथापि तत्संबन्धमात्रेण तथा प्रयोगः । स च सामान्यरूपेणोपस्थितौ बाधितः, पङ्कस्य भूसंबन्धित्वात् । यद्यपि तथोपस्थितावपि न तद्बाधः समुद्रपङ्कजनिकर्तृत्वस्य चन्द्रे संभवात्तथाप्यगाधजलत्वेन तस्य पङ्कासंभवस्तत्संभवेऽपि तत उत्पत्तेरननुभवः । यद्वा सुरधुनीवर्णनीयपद्माशयेन स प्रयोग इति । अतः सर्वत्रात्र विशेषरूपेणैवोपस्थितिर्वाच्या, सामान्यस्य विशेषेण परिवृत्तेः । फलं तु नीरधिः कूपः सागरः कूप इत्यादौ बोध्यम् । अत्र हि विशेषत उपस्थितौ कूपत्वाद्यनन्वयापत्तिरतः सामान्यमात्रपरत्वम् । तथा च क्षीरेति मूलमुपलक्षणम् । एतेन यौगिकरूढस्यापि संग्रहाच्चातुर्विध्यं नोक्तं, वृत्तिभेदपूर्वकार्थभेदेन पदभेदाङ्गीकाराच्चेति दिक् । अथ पदादि लक्षयति–विभक्त्यन्तमिति । सुबन्तं तिङन्तं च पदं तेषां पदानां व्यूहः समूहः । आद्यादित्वात्सप्तम्यन्तात्तसिः अर्थसमाप्तौ सत्यां निराकाङ्क्ष इति यावत् । तथा च विशिष्टैकार्थप्रतिपादकनिराकाङ्क्षपदसमूहो वाक्यमिति फलितम् ॥ १३ ॥

खण्डवाक्यं लक्षयति–युक्तार्थानामिति । संबद्धार्थप्रतिपादकानां पदानां यः सः व्यूहः तामर्थसमाप्तिं विना स खण्डवाक्यमित्यर्थः । यो गौरस्ति तमानयेत्यादिः । साकाङ्क्षार्थबोधकपदसमूह इति यावत् । क्वचिद्युक्तार्थतामिति पाठः । युक्तश्चायमन्यथाचासंगत्यापत्तेः । अत्र पाठे समासस्थलीयां युक्तार्थतामर्थसमाप्तिं च विनेत्याद्यर्थः । तथा च समासोऽपि न खण्डवाक्यमिति भावः । वाक्यत्वखण्डवाक्यत्वयोः क्वचिदेकपदे प्रत्येकं सत्त्वमप्यस्तीत्याह–वाक्यं चेति । एकमपि पदं क्वचिद्वाक्यं क्वचित्खण्डवाक्यं च भवतीत्यर्थः । तथा च पदसमूहत्वरहितप्रागुक्तलक्षणेऽत्र बोध्ये ॥ १४ ॥

क्रमेणोदाहरति–धूमेति । अत्र पञ्चम्यन्तस्यैकविभक्त्यन्तत्वादेकपदत्वं न पदसमूहत्वं, हेत्वाकाङ्क्षानिवर्तकतया निराकाङ्क्षविशिष्टैकार्थप्रति-

SGDF
Sri Gargeshwari Digital Foundation

**शिथिलं शयने लिल्ये मच्चित्तं ते शशिश्रियि ।**
**मस्तपिष्टकटीलोष्टगल्लादि ग्राम्यमुच्यते ॥ १० ॥**
**नेयार्थं लक्षणात्यन्तप्रसरादमनोहरम् ।**
**हिमांशोर्हारधिकारजागरे यामिकाः कराः ॥ ११ ॥**

---

दर्थसंदेहः । द्वितीयान्तत्वसप्तम्यन्तत्वसंदेहेन द्विवर्णत्वैकवर्णत्वसंदेहेन च पदस्वरूपसंदेह इति भावः । अप्रतीतत्वमाह—स्यादिति । कोशाद्यप्रसिद्धत्वे सति शास्त्रप्रसिद्धत्वं तत्त्वमित्यर्थः । उदाहरति—वीतेति । कर्मधारयः । अनुमाऽनुमानं तच्च विजातीयं वीतपदवाच्यम् । इदं च कारणलिङ्गकानुमाने प्रसिद्धं न्यायशास्त्रे इति केचित् । वस्तुतोऽन्वयमुखेन प्रवर्तमानं विधायकं वीतं, तच्च द्विविधं दृष्टस्वलक्षणसामान्यविषयमदृष्टस्वलक्षणसामान्यविषयं च । यत्सामान्यविषयोऽनुमेयस्तद्विशेषस्वरूपस्य दृष्टत्वमदृष्टत्वं चेत्यर्थः । तत्राद्यं पूर्ववत्, द्वितीयं सामान्यतो दृष्टम् । इदं च न्यायवार्तिकतात्पर्यटीकायां सांख्यतत्त्वकौमुद्यादौ च स्पष्टमिति बोध्यम् । आदिना आशयशब्दस्य मिथ्याज्ञानजन्यवासनार्थकस्य योगशास्त्रप्रसिद्धस्य परिग्रहः ॥ ९ ॥

उदाहरणेनैव शिथिलत्वं प्रथयति—शिथिलमिति । एवंविधानां शिथिलत्वे श्रवणमेव प्रमाणं, तथा च विलक्षणरचनकत्वमेव शिथिलत्वम् । शशिश्रियीति सप्तम्यन्तं शयनविशेषणम् । तथा च शशिश्रियि तत्सदृशे ते शयने मच्चितं लिल्ये लीनमित्यर्थः । इदं प्रकाशादौ नोक्तम् । ग्राम्यमपि तथैवाह—मस्तेति । हालिकाद्यविदग्धमात्रचमत्कारजनकत्वं ग्राम्यत्वम् । मस्तादयः शब्दाः क्रमेणोन्मत्तचूर्णान्ननितम्बमृत्पिण्डकपोलेषु ग्राम्याः । अयमप्यनित्यदोषः तेन विदूषकादौ वक्तरि न दोषत्वं हास्ये च गुणत्वम् ॥ १० ॥

नेयार्थत्वमाह—नेयार्थमिति । लक्षणाया अत्यन्तप्रसराद्यदमनोहरं तन्नेयार्थमित्यर्थः । अमनोहरेति पाठे लक्षणेति प्रथमान्तं पृथक्पदमत्यन्तप्रसरादमनोहरा लक्षणा यत्र तन्नेयार्थमित्यर्थः । लक्षणाया अत्यन्तप्रसरश्च परम्परितत्वं निषिद्धत्वं च । रूढिप्रयोजनशून्या लक्षणा निषिद्धा । द्विविधमपि उदाहरति—हिमांशोरिति । हिमांशोः कराः किरणाः कामिनीहारशोभाधिकारभीतचन्द्रमसो जागरे यामिका इत्यर्थः । अत्र हारधिकारादिपदममनोहरत्वे लक्षणया प्रयुक्तं तत्र परम्परा स्फुटैव ।

SGDF
Sri Gurgeshwari Digital Foundation

**क्लिष्टमर्थो यदीयोऽर्थश्रेणिनिःश्रेणिमृच्छति ।**
**हरिप्रियापितृवधूप्रवाहप्रतिमं वचः ॥ १२ ॥**
**अविमृष्टविधेयांशः समासपिहिते विधौ ।**
**विशन्ति विशिखप्रायाः कटाक्षाः कामिनां हृदि ॥ १३ ॥**
**अपराधीन इत्यादि विरुद्धमतिकृन्मतम् ।**
**अन्यसङ्गतमुत्तुङ्गहारशोभिपयोधरौ ॥ १४ ॥**

---

नचात्र रूढिफले स्तः मुख्यार्थभिन्नार्थाप्रतीतेः । वृत्त्यभावेनार्थानुपस्थिति-दूषकताबीजम् ॥ ११ ॥

क्लिष्टत्वमाह—क्लिष्टमिति । भूयस्याऽर्थपरंपरया स्वल्पतात्पर्यविषयार्थ-प्रत्यायकत्वं क्लिष्टत्वम् । यदीयोऽर्थः अर्थश्रेणिनिःश्रेणिं गच्छतीति वाच्योऽर्थः । उदाहरति—हरीति । हरिप्रियाया. लक्ष्म्याः पिता सिन्धु-स्तस्य वधूर्गङ्गा तत्प्रवाहसदृशं ते वच इत्यर्थः । अत्र गङ्गाप्रवाहप्र-तिममिति वाच्ये हरिप्रियेत्याद्युक्तेस्तत्त्वम् । अयं च समासस्य पदतया तदात्मकपदे दोषः ॥ १२ ॥

अविमृष्टविधेयांशत्वमाह—अविमृष्टेति । विधौ विधेये समासेन पिहिते आच्छादिते इतरविशेषणत्वेन निर्दिष्टे इति यावत् । तथा चेतरविशेषण-त्वेन निर्दिष्टविधेयकत्वमविमृष्टविधेयांशत्वं बोध्यम् । उदाहरति—विशन्ती-ति । अत्र विशिखवद्विशन्तीति विधेयं तच्च समासेन पिहितं तस्य कटा-क्षविशेषणत्वेन निर्देशात् क्रियान्वयाभावेन विधेयत्वासंभवात् । विशि-खकटाक्षयोः साम्यमात्रं तु ततः प्रतीयते । विशिखप्रायमिति पाठे तु न दोषः । अयमपि समासगतपददोष एव ॥ १३ ॥

विरुद्धमतिकृत्त्वमाह—अपरेति । वर्णनाविषयार्थविरुद्धार्थप्रतीतिज-नकत्वं विरुद्धमतिकृत्त्वम् । अपराधीन इत्यादीत्युदाहरणम् । नञ्समा-सेन तद्विषयपराधीनत्वाभावबोधकत्वेनाभिमतस्य तस्यापरस्याधीनोऽप-राधीन इति षष्ठीसमासेन तद्विरुद्धपराधीनत्वरूपार्थबोधकत्वात् । संदि-ग्धस्य तु न विरुद्धार्थबोधकत्वमिति ततो भेदः । अन्यसंगतत्वमाह—अन्येति । अन्यविशेषणतया तात्पर्यविषयस्यान्यविशेषणत्वप्रत्यायकत्व-मन्यसंगतत्वम् । उत्तुङ्गेत्याद्युदाहरणम् । पयोधरविशेषणतया तात्पर्यविष-यस्योत्तुङ्गत्वस्य हारविशेषणत्वप्रत्यायकत्वात् । समाससंदेहेन बोधवि-

SGDF
Sri Gargeshwari Digital Foundation

रसाद्यनुचिते वर्णे प्रतिकूलाक्षरं विदुः ।
न मामङ्गद जानासि रावणं रणदारुणम् ॥ १५ ॥
यस्मिन्नुपहतो लुप्तो विसर्ग इह तत्तथा ।
कुसंधिः पटवागच्छ विसंधिर्नृपती इमौ ॥ १६ ॥
हतवृत्तमनुक्तोऽपिच्छन्दोदोषश्चकास्ति चेत् ।

---

लम्बस्यात्र दूषकताबीजत्वम् । अत एव क्लिष्टत्वादिदोषचतुष्टयं समासनिष्ठमेवोक्तम् । इदमविमृष्टविधेयत्वान्तर्गतमिति प्रकाशादिः ॥ १४ ॥

पददोषानुक्त्वा क्रमप्राप्तवक्तव्यवाक्यदोषेषु प्रतिकूलाक्षरत्वमाह—रसाद्येति । वर्णे इति जातावेकवचनं सतिसप्तमी । शृङ्गाररसोचिताः कोमला वर्णा वीररसोचिताः कठिनाः तद्विपरीताश्चानुचिताः । तथाच तादृशवर्णकवाक्यत्वं प्रतिकूलाक्षरत्वम् । तत्र वीररसानुचितकोमलवर्णकवाक्यमुदाहरति—न मामिति । रावणस्याङ्गदं प्रत्युक्तिः । कर्कशमिति पाठे तु न दोषः ॥ १५ ॥

उपहतविसर्गत्वलुप्तविसर्गत्वे आह—यस्मिन्निति । यस्मिन्वाक्ये विसर्गः उपहतः उत्वं प्राप्तः लुप्तश्च तत इह दोषप्रकरणे तथा उपहतविसर्गं लुप्तविसर्गं चेत्यर्थः । इदमेवानयोर्लक्ष्यम् । तत्रोपहतो लुप्तो वि इत्याद्योदाहरणं सर्ग ईत्यन्त्योदाहरणम् । एतेषां क्रमेण बहुशः सत्वे तु रचनात्यन्तदुष्टेति बोध्यम् । अत्राकारप्रश्लेषादिनाऽन्यार्थप्रत्यायकत्वं दूषकताबीजम् । कुसंधित्वविसंधित्वे आह—कुसंधीति । संधावश्लीलत्वं क्लिष्टत्वं च कुसंधित्वम् । तत्राद्योहरणं—पटेति । पटो आगच्छेत्यत्र संधावश्लीलता पटवेति पाठेऽप्येवम् (?) । द्वितीयोदाहणं तु—उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः । 'नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्' इत्यादि बोध्यम् । संध्यभावो विसंधित्वम् । स च द्वेधा, शास्त्रीय ऐच्छिकश्च । तत्राद्योदाहरणं नृपती इमाविति । अत्र प्रगृह्यत्वप्रयुक्तप्रकृतिभावः । द्वितीयस्तु हे रोहिणि त्वमसि शीलवतीषु धन्या एनमित्यादौ । अस्य बन्धवैरस्याधायकत्वेन दूषकत्वम् । तदभावे तु न दोषः । अत्रान्त्यः सकृदेव दोषः । आद्यस्त्वसकृदेवेति कश्चित् । अन्त्यतुल्यत्वमाद्यस्येत्यपरे ॥ १६ ॥

हतवृत्तत्वमाह—हतवृत्तमिति । शास्त्रीयदोषाभावेऽपि अश्रव्यतया प्रतिभासादश्रव्यच्छन्दोवत्त्वं हतवृत्तत्वम् । उदाहरति—विशालेति । तारा-

SGDF
Sri Gargeshwari Digital Foundation

विशाललोचने ! पश्याम्बरं तारातरङ्गितम् ॥ १७ ॥
न्यूनं त्वत्खड्गसंभूतयशःपुष्पं नभस्तटम् ।
अधिकं भवतः शत्रून् दशत्यसिलताफणी ॥ १८ ॥
कथितं पुनरुक्ता वाक् श्यामाब्जश्यामलोचना ।
विकृतं दूरविकृतैरैयरुः कुञ्जराः पुरम् ॥ १९ ॥
पतत्प्रकर्षं हीनाऽनुप्रासादित्वे यथोत्तरम् ।
गम्भीरारम्भदम्भोलिपाणिरेष समागतः ॥ २० ॥

---

तरङ्गितं तद्युक्तम् । अत्र छन्दोलक्षणसत्त्वेन तदविरुद्धत्वेऽपि पश्याम्बरमित्यत्र पूर्वस्वरेण उत्तरस्वरस्य ग्रस्तत्वात्तत्र काचिदश्राव्यता भवति ॥ १७ ॥

न्यूनत्वमाह—न्यूनमिति । अपेक्षिताकथनकत्वं न्यूनत्वम् । उदाहरणं—त्वत्खड्गेति । अत्र यशसः पुष्परूपत्वे उक्ते खड्गस्य लतारूपत्वकथनमपेक्षितं तन्न कृतमिति न्यूनता । नभस्तटं त्वत्खड्गसंभूतयशःपुष्पं भवतीत्यर्थः । अधिकत्वमाह—अधिकमिति । अनपेक्षितकथनकत्वमधिकत्वम् । उदाहरणं—भवत इति । अत्रासिफणीत्येव सिद्धे लतेत्यनपेक्षितम् ॥ १८ ॥

कथितत्वमाह—कथितमिति । यत्र वाक्ये तत् इति शेषः । तथा च पुनरुक्तवाक्त्वं कथितत्वम् । उदाहरणं—श्यामेति । श्यामाब्जवत् श्यामे लोचने यस्या इत्यर्थः । अत्र श्यामपदं पुनरुक्तम् । विकृतत्वमाह—विकृतमिति । दूरविकृतैर्महतो धातुप्रत्ययादिविकाराद्धेतोः । तथा च तदुत्पन्नशब्दकत्वं विकृतत्वम् । उदाहरणमैयरुरिति । अत्र जौहोत्यादिकाद् ऋ गतावित्यस्मात् लङि आडागमे झौ शपः श्लौ द्वित्वे उरदत्वे हलादिः शेषेऽर्तिपिपर्त्योश्चेत्यभ्यासेत्वेऽभ्यासस्येतीयङि सिजभ्यस्तेति जुसि, जुसि चेति गुणे, आटश्चेति वृद्धौ च ऐयरुरिति रूपं तस्य प्रापुरित्यर्थः द्रागर्थाप्रत्यायकतयास्य दूषकत्वम् ॥ १९ ॥

पतत्प्रकर्षत्वमाह—पतदिति । आरम्भेऽङ्गीकृतस्यानुप्रासस्य यमकस्य वाऽग्रे त्यागो यत्र वाक्ये तत्त्वं पतत्प्रकर्षत्वम् । यथोत्तरमिति वीप्सायामव्ययीभावः । उत्तरत्रोत्तरत्र हीना अनुप्रासादयोऽङ्गीकृता यत्र तत्त्वे सति तत्तथेत्यक्षरार्थः । उदाहरति—गम्भीरेति । एषः गम्भीरः सा-

SGDF
Sri Gargeshwari Digital Foundation

समाप्तपुनरात्तं स्यादेष पीयूषभाजनम् ।
नेत्रानन्दी तुषारांशुरुदेत्यम्बुधिबान्धवः ॥ २१ ॥
अर्थान्तरपदापेक्षिक्रीडानृत्येषु सस्मितम् ।
मोघारम्भं स्तुमः शम्भुमर्धरम्भोरुविग्रहम् ॥ २२ ॥
अभवन्मतयोगः स्यान्न चेदभिमतोऽन्वयः ।

---

शय आरम्भ उपक्रमो यस्येदृशो वज्रहस्त इन्द्रः समागत इत्यर्थः । अत्र-पाणिरित्यादिनाऽनुक्रान्तभकारानुप्रासत्यागः ॥ २० ॥

समाप्तपुनरात्तत्वमाह—समाप्तेति । समाप्तेऽन्वये विशेषानाधायकविशेषणत्वं तत्त्वम् । तदनुरोधेन विशेष्यानुषङ्गेण क्रियाध्याहारेण वाक्यार्थान्तरप्रत्यायकत्वमस्य दूषकताबीजम् । उदाहरति—एष इति । अत्रोदेतीत्यन्तेन वाक्यार्थे समाप्तेऽम्बुधिबान्धव इत्यस्य विशेषानाधायकस्योपादानेन तत्त्वम् । तस्य तदाधायकत्वे तु न दोष इत्यन्यत्र स्पष्टम् ॥ २१ ॥

अर्थान्तरपदापेक्षित्वमाह—अर्थान्तरेति । द्वितीयान्यार्धपतितैकपदघटितान्यार्धवाक्यकत्वम्, अन्यार्धघटकपदार्थधीहेतुकान्यार्धवाक्यार्थबोधकत्वमिति यावत् । तत्त्वमर्थान्तरपदापेक्षित्वम् । यत्र चरणे इत्यपि बोध्यम् । अस्य कविसंप्रदायसिद्धवैरस्याधायकत्वेन दूषकता । अत एव द्वित्रिपदपाते न दोषः तथैव संप्रदायात् । उदाहरणं—क्रीडेति । अर्धः रंभोर्वाः पार्वत्या विग्रहः शरीरं यस्य तमर्धनारीश्वरं शिवं वयं स्तुमः, कीदृशम् उक्तशिवस्य यदर्धान्तरं स्वभागापेक्षया गौरीभागस्तत्पदापेक्षीणि तच्चरणापेक्षीणि यानि क्रीडायां तस्यैव नृत्यानि तेषु यतो मोघारम्भं निष्फलारम्भमत एव सस्मितं स्वभागस्य नृत्ये प्रवृत्तावपि गौरीभागस्य मानादिनाऽप्रवृत्तौ मोघारम्भता तथा च पूर्वार्धपठितसस्मितमित्यन्ते विशेषणे उत्तरार्धपठितमोघारम्भमित्यस्यापेक्षेति तत्त्वमिति भावः । अत्र संपूर्णपद्यमुदाहणं, लक्षणं तु एकदेशस्तन्त्रेण इति बोध्यम् । रम्भोरु इत्यस्य रम्भाया अप्सरोभ्यः श्रेष्ठा अर्थात्पार्वतीत्यर्थः । यद्वा औपम्याविवक्षया यथाश्रुतमेव साधु । यद्वा अर्धरम्भोरुरेव विग्रहो यस्येत्यर्थः ॥ २२ ॥

अभवन्मतयोगत्वमाह—अभवदिति । यद्यभिमतान्वयो न तदा स स्यादित्यर्थः । निराकाङ्क्षत्वादिना इष्टतात्पर्यविषयान्वयनिर्वाहासंभवक-

SGDF
Sri Gargeshwari Digital Foundation

येन बद्धोऽम्बुधिर्यस्य रामस्यानुचरा वयम् ॥ २३ ॥
द्विषां संपदमाच्छिद्य यः शत्रून् समपूरयत् ।
अस्थानस्थसमासं न विद्वज्जनमनोरमम् ॥ २४ ॥
मिथः पृथग्वाक्यपदैः संकीर्णं यत्तदेव तत् ।
वक्त्रेण भ्राजते रात्रिः कान्ता चन्द्रेण राजते ॥ २५ ॥

---

त्वमभवन्मतयोगत्वम् । उदाहरणं—येनेति । तत्र येनाम्बुधिर्बद्धो यस्य च वयमनुचरास्तस्य रामस्य तत्पदवाच्यस्यान्वयोऽभिमतो न चेदित्यन्वय इति कश्चित् । लक्ष्यलक्षणयोर्भिन्नावेवार्थौ तत्र लक्षणार्थ उक्तः, येन स बद्धः यस्य च रामस्य वयमनुचरा इति साकाङ्क्षो लक्ष्यार्थो बोध्य इत्यपरे । अत्र येनेति रामस्येत्यनेनानन्वितं विविभक्तित्वेन निराकाङ्क्षत्वाद् यस्येत्यनेनान्वितत्वाच्च । विशेषणानां मिथोऽनन्वयाच्च । लक्षणा तु न सुब्विभक्तौ । व्यत्यासे तु यस्येत्यनेनानन्वयापत्तिः । अर्थान्तरप्रत्यायकत्वमस्य दूषकताबीजम् । स एष लङ्कालङ्कारं रावणं हन्तुमुद्यत इति । स एष पुष्पकारुढो भरतं द्रष्टुमिच्छतीति वोत्तरार्धसंनिधौ न, विशेष्ये सर्वविशेषणानामन्वयादिति बोध्यम् ॥ २३ ॥

अस्थानस्थसमासत्वमाह—द्विषामिति । अत्र लक्षणं यागार्थः स्पष्ट एव । न विद्वदित्यस्योभयत्रान्वयात्तद्विद्वज्जनमनोरमं नेत्यर्थः । उदाहरणं—न विद्वदित्यादितः तथा कृतवानिति यत्तद् विद्वज्जनमनोरमं नेत्यर्थः । यः बुद्धिस्थो वर्णनीयो राजा । यदिति पाठस्तु चिन्त्य एव । एवं च न दोषः । अत्र द्विषामित्यादौ शौर्यवर्णने तद्व्यञ्जकपदेषु सर्वेषु वीररसानुगुणो दीर्घसमास उचितोऽपि न कृतः । तद्रसानभिव्यञ्जककव्युक्तौ न विद्वज्जनेत्यत्र तु कृतः अतोऽस्थानस्थसमासत्वम् । इदमुपलक्षणमस्थानस्थपदत्वस्यापि । लक्ष्यमिदमेव । नविद्वदिति नञोऽन्ते उचितस्यादौ पाठेनाविद्वदित्यर्थान्तरबोधकतयाऽस्थानस्थत्वात् क्वचित्पूर्वार्धोत्तरार्धयोर्व्यत्यासपाठः ॥ २४ ॥

संकीर्णत्वमाह—मिथ इति । वाक्यपदैरिति द्वन्द्वः । अन्यवाक्यमित्यस्याध्याहारः पृथक्त्वमुभयविशेषणं तत्र पदे पृथक्त्वमन्यवाक्यगतत्वं तथा चान्यवाक्यैस्तद्गतपदैश्चान्यवाक्यं यद् अन्योन्यं संकीर्णं संबद्धं तदेव संकीर्णपदवाच्यमेवेत्यर्थः । तथा चान्यवाक्यान्यप्रवेशकत्वं संकीर्णत्वं, तच्च अन्यभेदेन द्विविधं, पदसंकीर्णत्वं वाक्यसंकीर्णत्वं च । वाक्यान्तरपदानां वाक्यान्तरानुप्रवेशे आद्यम् । अन्यवाक्यस्य तत्प्रवेशेऽन्त्यम् । आद्योदाहरणं

SGDF
Sri Gargeshwari Digital Foundation

ब्रह्माण्डं त्वद्यशःपूरगर्भितं भूमिभूषण ।
आकर्णय पयःपूर्णसुवर्णकलशायते ॥ २६ ॥
भग्नप्रक्रममारब्धशब्दनिर्वाहहीनता ।
अक्रमः कृष्ण पूज्यन्ते त्वामनाराध्य देवताः ॥ २७ ॥
अमतार्थान्तरं मुख्येऽमुख्येनार्थे विरोधकृत् ।
त्यक्तहारमुरः कृत्वाशोकेनालिङ्गिताऽङ्गना ॥ २८ ॥

---

वक्त्रेणेति । अत्र कान्तान्वितवक्त्रस्य रात्र्यन्वितचन्द्रस्य च वाचकयोरन्यवाक्ये पाठः ॥ २५ ॥

द्वितीयोदाहरणं—ब्रह्माण्डमिति । अत्र हे भूमिभूषण त्वमाकर्णयेति वाक्यस्य ब्रह्माण्डमित्यादि—यते इत्यन्तवाक्यान्तः पाठः ॥ २६ ॥

भग्नप्रक्रमत्वमाह—भग्नेति । आरब्धधात्वाद्यनिर्वाहकत्वं भग्नप्रक्रमत्वम् । आकाङ्क्षितप्रकारकार्थानुक्तिकशब्दकत्वमिति यावत् । उदाहरति—अक्रम इति । हे कृष्ण त्वामनाराध्य देवताः पूज्यन्त इति यत्स अक्रमः अनुचितमित्यर्थः । क्वचिदनभ्यर्च्येति पाठः । अत्र पूज्यन्ते अनाराध्येति धातुभेदेन क्रमभङ्गः । तथा हि तत्र तावद् अनाराध्येति वाक्यं साकाङ्क्षमिति स्पष्टमेव । द्वितीयेऽपि तत्रोचितापि देवतान्तरपूजाऽनुचितत्वेनोच्यमानान्यक्रियाभावापेक्षया तत्त्वेन भासते इति सा उत्थापिता सा चाकाङ्क्षा पूर्वोक्तशब्दबोध्यकृष्णपूजनाभावमेव विषयीकरोति सा चानाराध्येति धातुना तेन प्रकारेण न निर्दिश्यते, शब्दस्यापि प्रकारत्वस्य न सोऽस्ति प्रत्यय इत्यादिना हरिणा प्रतिपादितत्वात् । असंपूज्येति पाठे तु न दोषः । प्रकाशोक्तमक्रमत्वमस्थानस्थपदत्वान्तर्गतमिति पृथङ् नोक्तम् । एवं प्रसिद्धित्वमपि तदुक्तमप्रयुक्तत्वान्तर्गतं बोध्यम् । यद्वा तन्त्रेण अक्रमोऽप्यत्रैव लक्षितः । शास्त्राद्युक्तक्रमाभावकत्वमक्रमत्वं लक्ष्यमिदमेव त्वामनाराध्य देवताः पूज्यन्त इति शास्त्रीयक्रमाकरणात् ॥ २७ ॥

अमतार्थान्तरत्वमाह—अमतेति । मुख्येऽर्थे प्रकृतरसेऽमुख्येन नञो विरोधार्थकत्वात्तद्विरुद्धेन अर्थेन रसान्तरेण तदुद्दीपनविभावानुभावव्यभिचारिभावादिरूपेण वा बोध्येन यद् विरोधकृत् प्रकृतरसविरुद्धरसव्यञ्जकसमभिव्याहार इति यावत् । ईदृशं यत् तत्त्वममतार्थान्तरत्वम् । मुख्यामुख्यार्थेनेति पाठे तु प्रतीयमानमर्थान्तरं मुख्येनामुख्येन चार्थेन वि-

SGDF
Sri Gargeshwari Digital Foundation

अपुष्टार्थो विशेष्ये चेन्न विशेषो विशेषणात् ।
विशन्ति हृदयं कान्ताकटाक्षाः खञ्जनत्विषः ॥ २९ ॥
कष्टः स्पष्टावबोधार्थमक्षमो वाच्यसन्निभः ।
व्याहतश्चेद्विरोधः स्यान्मिथः पूर्वापरार्थयोः ॥ ३० ॥
सहस्रपत्रमित्रं ते वक्त्रं केनोपमीयते ।
कुतस्तत्रोपमा यत्र पुनरुक्तः सुधाकरः ॥ ३१ ॥

---

रुद्धं यत्र तत्त्वं तदित्यर्थः । उदाहरति—त्यक्तेति । उरस्त्यक्तहारं कृत्वा शोकेनाङ्गनालिङ्गितेत्यर्थः । अत्र नायकेनेत्यर्थकेनाशोकेनेतिच्छेदेन प्रकृतकरुणरसविरोधिशृङ्गारव्यञ्जकमङ्गनालिङ्गनम् । व्यभिचारिणां स्वातन्त्र्येणोक्तावेवायं दोषः, रसव्यञ्जनायोक्तौ तु न दोषः । इदं च शाब्दधीहेत्विच्छाप्रतिबन्धद्वारा रसधीप्रतिबन्धकम् । अशोकेनेत्यस्य वृक्षेणेत्यर्थ इति केचित् ॥ २८ ॥

अथ वाच्येष्वर्थदोषेष्वपुष्टत्वमाह—अपुष्टेति । विशेष्योत्कर्षानाधायकविशेषणकत्वमपुष्टत्वम् । एतेषां चार्थान्वयव्यतिरेकानुविधायित्वादर्थदोषत्वम् । उदाहरति—विशन्तीति । अत्र खञ्जनत्विष इत्यनेन न कान्ताकटाक्षाणां हृत्प्रवेशाद्यनुकूलः कश्चिदतिशय आधीयते । तदनुपादाने बाधाद्यभावात् । शरसन्निभा इत्युक्तौ तु न दोषः ॥ २९ ॥

कष्टत्वमाह—कष्ट इति । वाचि वचने असन्निभः न सम्यक् शीघ्रं निभाति भासते तादृशोऽसत्कल्पो योऽर्थः स्पष्टावबोधार्थमक्षमो यत्र स इत्यर्थः । स्पष्टध्यभावेनासन्निव भवति यत्र इत्यर्थः । तत्त्वं कष्टत्वम् । आसत्त्यादिसत्त्वेऽपि कारणान्तरतो विलम्बबोध्यत्वमिति यावत् । वाच्यसन्निभ इत्येव लक्ष्यम् । अत्र वाच्यसदृश इति द्राक् प्रतीतेर्महतोक्तप्रयासेनोक्तार्थबोधे विलम्बः । व्याहतत्वमाह—व्याहत इति । पूर्वार्थस्य स्तुतिनिन्दान्यतररूपस्य परार्थेन सह विरुद्धत्वं व्याहतत्वं स्तुत्यताप्रयोजकरूपेण निन्दायां निन्द्यताप्रयोजकरूपेण वा स्तुतौ व्याहतिरिति भावः॥३०॥

उदाहरति—सहस्रेति । अत्र कमलमित्रे तदुपमाप्राप्तैवेति केनोपमीयत इतिनिषेधोऽनुपपन्न इति कश्चित् । वस्तुतस्तु कमलसादृश्येन स्तुत्यस्य मुखस्योपमानाभावप्रदर्शने कमलसादृश्यमेव निन्द्यताप्रयोजकं प्रतीयत इति विरोध इति बोध्यम् । द्वितीयोदाहरणं तु—'गोस्तनीमधुपीयूषमस्तु लोकम-

SGDF
Sri Gargeshwari Digital Foundation

दुष्क्रमग्राम्यसंदिग्धास्त्रयो दोषाः क्रमादमी ।
त्वद्भक्तः कृष्ण ! गच्छेयं नरकं स्वर्गमेव वा ॥ ३२ ॥
एकं मे चुम्बनं देहि तव दास्यामि कञ्चुकम् ।
ब्रूत किं सेव्यतां चन्द्रमुखीचन्द्रकिरीटयोः ॥ ३३ ॥
अनौचित्यं कीर्तिलतां तरङ्गयति यः सदा ।
प्रसिद्ध्या विद्यया वापि विरुद्धं द्विविधं मतम् ॥ ३४ ॥

---

नोमुदे । मदनोन्मत्तचार्वङ्गीवचोमधु मुदे मम' इति बोध्यम् । अत्र मधुत्वेनैव निन्दा स्तुतिश्च । पुनरुक्तत्वमाह—कुत इति । पुनरुक्त इत्यस्यावृत्तिर्वक्त्रं केनोपेत्यस्यानुषङ्गः । तथा च यस्य मुखस्य सुधाकरश्चन्द्रः पुनरुक्तो व्यर्थस्तत्रोपमा कुतः । अयमर्थः केनोपमीयते इत्यनेन पुनरुक्त इति भावः । यद्वाऽनुषङ्गं विनैव कुत इत्यनेनैव तन्निषेधे चन्द्रवैयर्थ्यमर्थसिद्धमपि आवृत्त्या श्लोकनिबद्धमिति पुनरुक्तिः । अयं भीतादौ गुण इत्यनित्यदोषः ॥ ३१ ॥

दुष्क्रमेति । बोध्या इति शेषः । अनुचितक्रमेणाभिधानविषयत्वं दुष्क्रमत्वम् । वैदग्धीराहित्येनोच्यमानार्थत्वं ग्राम्यत्वम् । वक्तृतात्पर्यविषयार्थनिश्चये प्रमाणान्तरापेक्षत्वं संदिग्धत्वम् । क्रमेण त्रयाणां त्रीण्यर्थान्युदाहरति—त्वदित्यादि । अत्र स्वर्गं नरकमेव वेति युक्तं भक्तिफलस्य स्वर्गस्य प्राङ्निर्देशार्हत्वान्नरकमित्यस्यादावुक्तया तु दोषः । हे कृष्ण त्वद्भक्तोऽहमित्यादिर्वाक्यार्थः ॥ ३२ ॥

एकमिति । ग्राम्योक्तिः । अत्र चुम्बनादिपदानामग्राम्यत्वेऽप्यर्थे स्पष्टमचतुरबोध्यत्वेन तत्त्वम् । ब्रूतेति । कान्ताशिवयोर्मध्ये किं सेव्यतामिति यूयं कथयतेत्यर्थः । अत्र प्रकरणाद्यभावे शान्तशृङ्गारान्यतरसंदेहात्तात्पर्यविषयनिश्चये प्रमाणान्तरापेक्षा ॥ ३३ ॥

अनौचित्यमाह—अनौचित्यमिति । अयोग्यसंबन्धकत्वं तत्त्वम् । उदाहरणं—कीर्तीति । अत्र लतायास्तरङ्गसंबन्धायोग्यत्वात् तत्त्वं, पल्लवयतीति तूचितम् । विरुद्धत्वमाह—प्रसिद्ध्येति । कविप्रसिद्ध्येत्यर्थः । तेनान्यप्रसिद्धिविरुद्धस्य न दोषत्वम् । विद्ययेति । शास्त्रेणेत्यर्थः । विरुद्धमित्यस्यावृत्तिर्बोध्या । प्रसिद्ध्यादिविरुद्धं यत्तद्विरुद्धं तच्च तत एव द्विविधं मतमित्यर्थः ॥ ३४ ॥

SGDF
Sri Gargeshwari Digital Foundation

न्यस्तेयं पश्य कन्दर्पप्रतापधवलद्युतिः ।
केतकी शेखरे शम्भोर्धत्ते चन्द्रकलातुलाम् ॥ ३५ ॥
सामान्यपरिवृत्तिः स्यात् कुण्डलच्छविविग्रहा ।
विशेषपरिवृत्तिः स्याद्वनिता मम चेतसि ॥ ३६ ॥
द्वे स्तः सहचराऽचारुविरुद्धान्योन्यसंगती ।
ध्वाङ्क्षाः सन्तश्च तनयं स्वं परञ्च न जानते ॥ ३७ ॥

---

आद्यमुदाहरति—न्यस्तेयमिति । कामप्रतापश्वेतकान्तिरेवेयं न्यस्तेति त्वं पश्येत्यर्थः । अत्र प्रतापस्य धवलद्युतिः कविप्रसिद्धिविरुद्धा तस्या रक्तत्वेन वर्णनात् । अत एव प्रतापद्युत्यंशे लोकप्रसिद्धिविरोधेऽपि न दोषः । कविप्रसिद्धिसत्त्वात् । द्वितीयमुदाहरति—केतकीति । शंभोः शेखरे मुकुटे न्यस्ता केतकी चन्द्रकलासाम्यं धत्ते इत्यर्थः । केतकीपूजा च शंभोः पुराणादिविरुद्धेति भावः । प्राप्ताः श्रियः सकलकामदुघास्ततः किमित्यादौ प्रकाशाद्युक्तो बहुशः प्रतिपाद्यार्थस्यैकोक्त्या कथनरूपनवीकृतत्वदोषस्तु कथितपदान्तर्गत इति पृथङ्नोक्तः ॥ ३५ ॥

सामान्यपरिवृत्तित्वमाह—सामान्येति । अपेक्षितार्थसमर्पकसामान्यरूपोक्तित्यागेनानपेक्षितविशेषोपादानकत्वं सामान्यपरिवृत्तित्वम् । लक्ष्यमाह—कुण्डलेति । मम चेतसीत्यस्यानुषङ्गः, स्यादिति पूर्वोत्तरान्वयी । एवमग्रेपि । अत्र विग्रहे कनककान्तेर्विवक्षणेनापेक्षितकनकसामान्यत्यागेन विशेषकुण्डलोक्तिः । विशेषपरिवृत्तित्वमाह—विशेषेति । अपेक्षितविशेषत्यागेनानपेक्षितसामान्याभिधानकत्वं विशेषपरिवृत्तित्वम् । लक्ष्यमाह—वनितेति । अत्र वनितात्वेन सर्वासामिच्छाविषयत्वासंभवाद्वल्लभात्वादिरूपेणापेक्षितविशेषत्यागेन सामान्यवनितोक्तिः ॥ ३६ ॥

सहचराचारुत्व-विरुद्धान्योन्यसंगतित्वे आह—द्वौ स्त इति । तथेति क्वचित्पाठः । सहचराचारुश्च विरुद्धाऽन्योन्यसंगतिश्च ते द्वौ दोषौ स्त इत्यर्थः । सहचरेति भावप्रधानो निर्देशः । अचारु साहचर्यमित्यर्थः । राजदन्तादिः । तच्च स्तूयमानैर्निकृष्टैः सहोत्कृष्टस्य ( उत्कृष्टैः सह निकृष्टस्य ) चैकक्रियान्वयरूपमिति द्विविधम् । उभयमुदाहरति—ध्वाङ्क्षा इति । काकाः सन्तश्च स्वपरेषु भेददृष्टिशून्या इत्यर्थः । अत्र उभयोर्मिथः साहचर्यं न रम्यमिति भेदद्वयमप्यत्रैव ॥ ३७ ॥

SGDF
Sri Gargeshwari Digital Foundation

सरोजनेत्र पुत्रस्य मुखेन्दुमवलोकय ।
पालयिष्यति ते गोत्रमसौ नरपुरन्दरः ॥ ३८ ॥
पदे तदंशे वाक्यांशे वाक्ये वाक्यकदम्बके ।
यथानुसारमभ्यूहेद्दोषान् शब्दार्थसंभवान् ॥ ३९ ॥
दोषमापतितं स्वान्ते प्रसरन्तं विशृङ्खलम् ।
निवारयति यस्त्रेधा दोषाङ्कुशमुशन्ति तम् ॥ ४० ॥
दोषे गुणत्वं तनुते दोषत्वं वा निरस्यति ।
भवन्तमथ वा दोषं नयत्यत्याज्यतामसौ ॥ ४१ ॥

---

द्वितीयमुदाहरति—सरोजेति । हे सरोजनेत्र पुत्रस्य मुखेन्दुमित्याद्यार्थः । असौ पुत्रो नरेन्द्रस्ते गोत्रं कुलं पालयिष्यतीत्यन्त्यार्थः । अत्र नेत्ररूपसरोजस्य मुखरूपेन्दोश्च संगतिर्विरुद्धा तस्य तदप्रकाशकत्वात् पुरन्दरस्य गोत्रपालनं च विरुद्धं गोत्रभित्त्वात्तस्य । एवं च पुत्रे पुरन्दररूपकं सुतरां विरुद्धम् । अयमेव प्रकाशितविरुद्ध इति प्रकाशादावुक्तः । विध्ययुक्तत्वानुवादायुक्तत्वरूपदोषद्वयं तु अविमृष्टविधेयांशत्वाद्भग्नप्रक्रमत्वाद्वा न भिन्नम् । एवमन्येषामपि यथासंभवमुक्तेष्वेवान्तर्भावो बोध्यः । अश्लीलत्वं च नार्थदोष इति तात्पर्यम् ॥ ३८ ॥

एवं दोषानुक्त्वा पर्यवसिततदाश्रयभेदान्कथयन्नुपसंहरति—पदे इति । पदे सुबन्ततिङन्तादौ, पदांशे प्रकृतिप्रत्ययादौ, वाक्यांशे समासे खण्डवाक्ये च, वाक्ये महावाक्ये, वाक्यकदम्बके प्रबन्धे यथानुसारं लक्षणानुरोधानतिक्रमेण शब्दार्थनिष्ठत्वेन द्विविधान् दोषान् पदादौ तद्बोध्ये च यथालक्षणमूहेदित्यर्थः । यथावकाशमिति पाठे यथासंभवमित्यर्थः । यथा श्रुतिकटुत्वं पदादिसर्वगतं, च्युतसंस्कृतित्वादि पदनिष्ठमेव । वाक्ये शक्तिविरहादवाचकत्वमपि पदतदेकदेशनिष्ठमेवेत्यादि बोध्यम् ॥ ३९ ॥

उक्तदोषापवादतया तत्त्वमिति सूचयन् दोषाङ्कुशलक्षणमाह—दोषमिति । यः स्वान्ते आपतितं ज्ञातमपि शृङ्खलाशून्यतया प्रतिबन्धकाभावेन प्रसरन्तं दोषमर्थावबोधरसोत्पत्तिप्रतिबन्धेन दोषत्वेन निश्चितं त्रेधा प्रकारत्रयेण निवारयति स दोषाङ्कुश इत्यर्थः ॥ ४० ॥

प्रकारत्रयमेवाह—दोष इति । क्वचिद्गुणत्वज्ञानाद्दोषोऽपि गुणो भवति क्वचित्कविसमयकृतदोषत्वाभावज्ञानाद्दोषत्वं मुञ्चति, गुणत्वं तु न याति ।



SGDF
Sri Gargeshwari Digital Foundation

मुखं चन्द्रश्रियं धत्ते श्वेतश्मश्रुकराङ्कुरैः ।
अत्र हास्यरसोद्देशे ग्राम्यत्वं गुणतां गतम् ॥ ४२ ॥
तव दुग्धाब्धिसंभूतेः कथं जाता कलङ्किता ।
कवीनां समयाद्विद्याविरुद्धोऽदोषतां गतः ॥ ४३ ॥
दधार गौरी हृदये देवं हिमकराङ्कितम् ।
अत्र श्लेषोदयान्नैव त्याज्यं हीति निरर्थकम् ॥ ४४ ॥

महादेव इति प्राग्वत् । द्वितीयस्तेनासाविति विशेषः ॥

इति चन्द्रालोके दोषनिरूपणो नाम द्वितीयो मयूखः ।

---

कचित् श्लेषानुप्रासादिनिर्वाहकतया तस्येष्टत्वरूपाऽत्याज्यत्वज्ञानात्पतन्तमपि दोषं स्वीकारयति दोषाङ्कुश इत्यर्थः ॥ ४१ ॥

तत्राद्यलक्ष्यमाह—मुखमिति । वृद्धमुखवर्णनम् । श्वेतश्मश्रूण्येव किरणाङ्कुरास्तैः । अत्र श्वेतेत्यादेः स्त्रीविदूषकाद्युक्तेर्ग्राम्यत्वेऽपि हास्यरसपोषकत्वाद्गुणत्वम् । तदाह—अत्रेति । उद्देशः प्रतिपादनं सत्सप्तमी ॥ ४२ ॥

द्वितीयलक्ष्यमाह—तवेति । चन्द्रेति शेषः क्षीरोदजश्चन्द्रः अकलङ्कः सकलङ्कस्त्वत्रिनेत्रज इति पुराणादौ प्रसिद्धम् । तत्राद्यस्यापि कलङ्कित्ववर्णने न दोषः कविप्रसिद्ध्या द्वयोश्चन्द्रयोरैक्याध्यवसायात् । तथा च दुग्धाब्धिजचन्द्रस्य कलङ्कित्ववर्णनेन विद्याविरुद्धत्वरूपदोषप्राप्तावपि कविसमयेन उक्तरीत्या दोषत्वाभावमात्रं, न गुणत्वं रसाद्यपरिपोषकत्वात् । एवं पृष्टश्चन्द्र एवोत्तरयतीत्याह—कवीनामिति । विद्याविरुद्धः शास्त्रविरुद्धत्वदोषः अदोषतां गतः प्राप्तः ॥ ४३ ॥

तृतीयलक्ष्यमाह—दधारेति । गौरी गौराङ्गी पार्वती च देवं कामं च शिवं च मकरो मीनः, हिमकरश्चन्द्रः, अत्र कामपक्षे हिशब्दस्य वैयर्थ्येऽपि शम्भुना श्लेषनिर्वाहायोपादानेन तस्यावश्यकत्वात् तत्त्वं, तादृशकान्तयोर्हृदये शिवमन्मथयोः स्थितेः, तदाह—अत्रेति । इदं च दिक्प्रदर्शनं विस्तरस्तु काव्यप्रकाशादौ द्रष्टव्यः ॥ ४४ ॥

इति श्रीमत्पायगुण्डोपाख्यवैद्यनाथरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां द्वितीयो विलासः ।

SGDF
Sri Gargeshwari Digital Foundation

## तृतीयो मयूखः ।

### अथ लक्षणानि

अल्पाक्षरा विचित्रार्थख्यातिरक्षरसंहतिः ।
उषाकान्तेनानुगतः शूरः शौरिरयं पुनः ॥ १ ॥
शोभा ख्यातोऽपि यद्दोषो गुणकीर्त्या निषिध्यते ।
मुधा निन्दन्ति संसारं कंसारिर्यत्र पूज्यते ॥ २ ॥
अभिमानो विचारश्चेदूहितार्थनिषेधकृत् ।
इन्दुर्यदि कथं तीव्रः सूर्यो यदि कथं निशि ॥ ३ ॥
हेतुस्त्यक्त्वा बहून् पक्षान् युक्त्यैकस्यावधारणम् ।
नेन्दुर्नार्कोऽयमौर्वाग्निः सागरादुत्थितो दहन् ॥ ४ ॥

---

अथ काव्यलक्षणोद्देशक्रमेण लक्षणानि वक्तुं प्राग्वत्प्रतिजानीते—अथेति । शेषः प्राग्वत् । काव्यत्वज्ञापकत्वं लक्षणत्वं तद्भेदान्वक्तुमादावक्षरसंहतिमाह—अल्पेति । ख्यातिरिति कर्मणि क्तिन् । बह्वर्थप्रत्यायकाल्पाक्षरशब्दत्वमक्षरसंहतित्वम् । उदाहरति—उषेति । अयं शौरिः कृष्णो यत उषाकान्तेनानिरुद्धेनानुगतोऽतः पुनः शूर एवेत्यर्थः । शूरपदे श्लेषः । अत्र चाल्पाक्षरेणोषाकान्तेनानुगत इति विशेषणेनोषापरिणये बाणपुरवृत्तं भगवत्पौरुषं सर्वं स्मारितम् । अयं समासोक्तिभेद इति कश्चित् ॥ १ ॥

शोभामाह—शोभेति । गुणवर्णनेन प्रसिद्धदोषतिरस्कारकत्वं शोभात्वम् । उदाहरति—मुधेति । अत्र भगवत्पूजालक्षणगुणवत्त्वेन संसारदोषापाकरणम् ॥ २ ॥

अभिमानमाह—अभीति । यदि ऊहितार्थप्रतिषेधको विचारस्तदा सः । कल्पितार्थप्रतिषेधकयुक्त्युपन्यासकत्त्वमभिमानत्वम् । उदाहरणम्—इन्दुरिति । अत्र विरहिण्या प्रागिन्दुत्वेन तर्कितं प्रसिद्धं चन्द्रं तीव्रत्वेन निषिध्य ततः सूर्यत्वेन तर्कितो रात्रिसंबन्धेन निषिद्धः ॥ ३ ॥

हेतुमाह—हेतुरिति । अन्यदूषणेनैकपक्षावधारणकत्वं हेतुत्वं, परिशेषपर्यवसन्नपक्षकत्वं तत्त्वमिति यावत् । युक्त्येति मध्यमणिन्यायेनोभयान्वयि । उदाहरणम्—नेन्दुरिति । अयं वाडवाग्निरेव न चन्द्रो नापि सूर्यः यतः सागरादुत्थितो दहंश्च । अस्याद्ये यथासंख्यमन्वयः, अन्त्ये व्यत्यासेन । तेन तथेति बोध्यम् । अयमपह्नुतिभेद इति कश्चित् ॥ ४ ॥

SGDF
Sri Gargeshwari Digital Foundation

प्रतिषेधः प्रसिद्धानां कारणानामनादरः ।
न युद्धेन भ्रुवोः स्पन्देनैव वीरा निपातिताः ॥ ५ ॥
निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथानृतम् ।
ईदृशैश्चरितै राजन् सत्यं दोषाकरो भवान ॥ ६ ॥
स्यान्मिथ्याध्यवसायश्चेदसती साध्यसाधने ।
चन्द्रांशुसूत्रग्रथितां नभःपुष्पस्रजं वह ॥ ७ ॥
सिद्धिः ख्यातेषु चेन्नाम कीर्त्यते तुल्यतोक्तये ।
युवामेवेह विख्यातौ त्वं बलैर्जलधिर्जलैः ॥ ८ ॥

---

प्रतिषेधमाह—प्रतिषेध इति । अप्रसिद्धकारणादरेण प्रसिद्धकारणानादरकत्वम् । न युद्धेनेति । अस्य, किं तु कामिन्येति शेषः । अत्र वीरनिपातने कारणत्वेन प्रसिद्धयुद्धानाश्रयेणाप्रसिद्धस्पन्दाश्रयणम् । अयं हेत्वपह्नुत्यन्तर्गत इति कश्चित् ॥ ५ ॥

निरुक्तमाह–निरुक्तमिति । नाम्नो निर्वचनमवयवार्थकथनद्वारा तदुत्पत्तिनिदर्शनं निरुक्तम् । तद् द्विधा सत्यं मिथ्या च । तत्र व्याकरणसाध्यं सत्यं तदसाध्यं मिथ्या । उभयोरुदाहरणम्–ईदृशैरिति । अत्र दोषाणामाकर इति व्याकरणसाध्यत्वात्सत्यम् । एवं रात्रिकारित्वेऽर्थेऽपि । कृञ इति टः । प्रकृतिरञ्जनाद्राजेति तु तदसाध्यत्वान्मिथ्या । राजृ दीप्तावित्यस्य हि राजन्निति रूपम् । तथा च सुकरनिर्वचनं सत्यं तदन्यदुणादितो दुःसाध्यं मिथ्येति फलितम् ॥ ६ ॥

मिथ्याध्यवसायमाह–स्यादिति । कथ्यते इति शेषः । साध्यसाधनयोर्मिथ्याभूतयोर्यदि कथनं तदा मिथ्याध्यवसायः । उदाहरणम्–चन्द्रेति । अत्र चन्द्रकिरणरूपसूत्रग्रन्थनं कारणमाकाशपुष्पमाला कार्यमुभयोरप्यसत्यत्वम् । तत्र चन्द्रांशोः सूत्ररूपेणासत्त्वं पुष्पस्य तु स्वरूपेणैवेति भेदः ॥७॥

सिद्धिमाह–सिद्धिरिति । यदि ख्यातेषु तुल्यतोक्तये नाम कीर्त्यते सा सिद्धिः इत्यन्वयः । तुल्यतासिद्ध्यर्थं प्रसिद्धसाहचर्येण कथनं सिद्धिः । उदाहरणम्–युवामिति।इह भूतले । तामे(? वे)वाह–त्वमिति । अत्र प्रसिद्धोदधिसाहचर्येण कस्य चिद्राज्ञः कथनम् । तदर्थं यद्यप्यत्र त्वमित्यस्यानामत्वं तथापि तत्प्रतिपादकत्वमस्त्येवेति न दोषः । तथैव तत्र निवेशात् । इयं गुणोत्कृष्टैरिति तुल्ययोगितान्तर्गतेति कश्चित् ॥ ८ ॥

SGDF
Sri Gargeshwari Digital Foundation

युक्तिर्विशेषसिद्धिश्चेद्विचित्रार्थान्तरान्वयात् ।
नवस्त्वं नीरदः कोऽपि स्वर्णैर्वर्षसि यन्मुहुः ॥ ९ ॥
कार्यं फलोपलम्भश्चेद्व्यापाराद्वस्तुतोऽथ वा ।
असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् ॥ १० ॥
इत्यादि लक्षणं भूरि काव्यस्याहुर्महर्षयः ।
स्वर्णभ्राजिष्णुभालत्वप्रभृतीव महीभुजः ॥ ११ ॥
महादेव इति पूर्ववत् । तृतीयस्तेनासाविति विशेषः ।
इति चन्द्रालोकालङ्कारे लक्षणनिरूपणो नाम तृतीयो मयूखः ।

---

युक्तिमाह—युक्तिरिति । विचित्रधर्मसंबन्धकथनेनोपमानापेक्षयोपमेये चमत्काराधायकविशेषसिद्धिर्युक्तिः । यत्रापूर्वार्थसंबन्धेनाभिलषितस्य विशेषस्य सिद्धिः, युक्तिः सा तत्रेति यावत् । अयं व्यतिरेकालंकारभेद इति कश्चित् । उदाहरणम्—नव इति । अत्रैतज्जलदे इतरस्मिन्नदृष्टसुवर्णवृष्ट्या वर्णनीये नृपे प्रसिद्धनीरदापेक्षया विशेषस्य नवनीरदत्वस्य सिद्धिः । स्वर्णैरिति सहार्थे तृतीया । प्रसिद्धत्वाज्जलस्य कर्मणोऽनुपादानम् । क्वचित्स्वर्णमित्येव पाठः ॥ ९ ॥

कार्यमाह—कार्यमिति । अन्यदीयव्यापारादन्यवस्तुतो वा यदि जातफलानुभवोऽन्यत्र तदा तत्कार्यम् । उभयोदाहरणमाह—असाविति । अत्रोदयरूपव्यापारेण स्वतो वा चन्द्रेण संपादितस्य कामिनीमानच्छेदाख्यफलस्यानुभवोऽन्यत्रेति नायके तत्फलं वस्तुतः संपन्नमिति द्वयोरपीदमेव लक्ष्यम् । इदं परिणामालंकारान्तर्गतमिति कश्चित् ॥ १० ॥

मया कतिपयानि लक्षणानि दर्शितानि, अन्यान्यपि सन्ति परिगणनाभावादिति कथयन्सदृष्टान्तमुपसंहरति—इत्यादीति । आदिना भङ्ग्यन्तरेणाप्युक्तिषु काव्यत्वसत्ता ध्वनिता, लक्षणस्य काव्यत्वज्ञापकत्वात् । तल्लक्ष्याणि त्वन्यत्र स्पष्टानि । तथा चेदृशोक्तौ काव्यत्वं नान्यत्रेति बोधितम् । यथा कनकतेजस्विललाटत्वादीनि राजचिह्नानि भूयांसि तथा काव्यलक्षणान्यपि बहूनीत्यर्थः ॥ ११ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां तृतीयो विलासः ।

SGDF
Sri Gurgeshwari Digital Foundation

## चतुर्थो मयूखः ।

अथ गुणाः

श्लेषो विघटमानार्थघटमानत्ववर्णनम् ।
स तु शाब्दः सजातीयैः शब्दैर्बन्धः सुखावहः ॥ १ ॥
उल्लसत्तनुतां नीतेऽनन्ते पुलककण्टकैः ।
भीतया मानवत्यैव श्रियाऽऽश्लिष्टं हरिं स्तुमः ॥ २ ॥
यस्मादन्तःस्थितः सर्वः स्वयमर्थोऽवभासते ।
सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः ॥ ३ ॥

---

प्राग्वत्प्रतिजानीते—अथेति । शेषपूरणमपि प्राग्वत् । गुणसामान्यलक्षणं तु स्वयमेव वक्ष्यति । अथ तद्भेदान् कथयन्नादौ श्लेषमाह—श्लेष इति । योऽर्थो न घटते संपद्यते तस्य केनचिन्निमित्तेन घटमानत्ववर्णनं यत्सोऽर्थश्लेषः । शब्दश्लेषमाह—स त्विति । सजातीयैः शब्दैः सुखावहो बन्धस्तु शाब्दस्तत्संबन्धी स श्लेष इत्यर्थः । तथाच श्लेषो द्विधा—अर्थश्लेषः शब्दश्लेषश्च । तत्र असंभावितार्थस्य युक्तिभिः सिद्धत्वेन कथनमाद्यः । बहूनां पदानामेकवद्भासनं द्वितीयः । सामान्यलक्षणं त्वेतदन्यतरत्वमिति बोध्यम् ॥ १ ॥

उभयोरुदाहरणमाह—उल्लसदिति । अत्र मानवत्यालिङ्गनस्यासंभावितस्य हेतुभूतभयोपपादकं पूर्वार्धम् । लक्ष्मीपुलकरूपकण्टकैर्योल्लसन्ती आविर्भूता तनुता कृशता तां नीते प्रापितेऽनन्ते शेषे सति । तथाचास्य भये निमित्तत्वं फलति । अत एव भीतया मानवत्यैव । एवस्तदन्यावस्थाव्यवच्छेदकः । लक्ष्म्या आलिङ्गितं विष्णुं स्तुम इत्यर्थः । तथाच, तस्याः समुन्नतरोमसंबद्धताद्दशशेषवपुःकृशताजन्यभयमघटितार्थघटकमित्याद्यलक्ष्यत्वम् । द्वितीयोदाहरणत्वं तु—नीतेनन्ते श्रियाश्लिष्टमित्येकपदवद्भानाद्वर्णानां साजात्यात्स्फुटमेव ॥ २ ॥

प्रसादमाह—यस्मादिति । यद्वशात्सूक्तस्य काव्यस्यान्तःस्थितः सर्वोऽर्थः स्पष्टमवभासते झटिति चमत्कारजनको भवति सलिलवत्स प्रसादः । यद्वप्रतिपाद्यवाक्यार्थस्य विच्छित्तिजनकत्वं तत्त्वं प्रसादत्वम् । एवं च वाक्यनिष्ठत्वमस्योक्तम् । दण्डी तु प्रसिद्धार्थकत्वं प्रसादः । यथा—'मलिनमपि

SGDF
Sri Gargeshwari Digital Foundation

समतालपसमासत्वं वर्णाद्यैस्तुल्यताऽथ वा।
श्यामला कोमला बाला रमणं शरणं गता॥ ४॥
समाधिरर्थमहिमा लसद्घनरसात्मना।
स्यादन्तर्विशता येन गात्रमङ्कुरितं सताम्॥ ५॥

---

हिमांशोर्लक्ष्म लक्ष्मीं तनोति' इति कलङ्कवर्णनम्। इदमपि दाक्षिणात्यरीत्या। प्राच्यरीत्या तु प्रसिद्धत्वादिदं न वर्णनं किं त्वन्यथा वाच्यमित्याह। अन्ये तु गुणानां रसधर्मत्वस्य वक्ष्यमाणत्वादर्थो न रसस्तदाकारा चित्तवृत्तिर्हि तदवभासः। एवं च यद्बलात् रसे झटिति प्रतीयमानत्वं रचनायां स स्वच्छतारूपः प्रसादः। रचना चान्यतोऽवगन्तव्या। अयं च सर्वरससाधारणः। तदुक्तम्—'समर्पकत्वं काव्यस्य यतः सर्वरसान् प्रति। स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः' इति। शब्दार्थयोस्तु रसव्यञ्जकत्वादौपचारिकं तद्गुणत्वमित्याहुः। लक्ष्यमप्येतदेव। विस्मयस्थायिकाद्भुतरसस्यापि अत्र सत्त्वात्। सलिलस्येवेति दृष्टान्तोक्त्या प्रथममतमेवैतद्ग्रन्थकारसंमतमिति तत्त्वम्। अत एवोक्तमित्युक्तम्। वस्तुतो रसत्वस्यापि सलिले सत्त्वात्तृतीयमतमप्येतत्संमतमिति बोध्यम्॥ ३॥

समतामाह—समेति। बहुसमासाभावः वर्णादिसंख्यासाम्येन वर्णसाम्येन च पदादितुल्यता वा समता। वर्णशब्देन अत्र स्वरा आद्येन पदतत्संख्यादिपरिग्रहः। उभयलक्ष्यमाह—श्यामेति। अत्र समासस्यैवाभावेन तदभावः स्पष्ट एव। यथाश्रुते तु तदुदाहरणत्वानुपपत्तिः। अत्र पदद्वये त्र्यक्षरत्वेन तृतीये द्व्यक्षरत्वेन पदसाम्येन पादयोः साम्यम्। प्रथमपादे आकारवर्णसाम्यं, द्वितीयेऽकारवर्णसाम्यं च। एकपादे समासाभावमात्रेण समत्वम्। पाञ्चाल्यां तु बहुषु पादेष्वेव तदभाव इष्ट इति एकपादत्वसमानाधिकरणमसमस्तत्वं समता। बहुपादत्वसमानाधिकरणं तत्पाञ्चालीति भेदान्न तत्र प्रथमलक्षणातिप्रसङ्गः। केवलस्वरसाम्येनानुप्रासाभावाद्द्वितीयं नानुप्रासेऽतिप्रसक्तमिति बोध्यम्॥ ४॥

समाधिमाह—समाधिरिति। लसद्घनरसात्मना प्रतिभासमाननिबिडरसरूपेणान्तर्विशता ज्ञातेन येनार्थमहिम्ना सतामालङ्कारिकाणां साधूनां च गात्रमङ्कुरितं रोमाञ्चवद्भवति सोऽर्थमहिमा समाधिः। तथा चान्यधर्म-

SGDF
Sri Gurgeshwari Digital Foundation

माधुर्यं पुनरुक्तस्य वैचित्र्यं चारुतावहम् ।
वयस्य पश्य पश्यास्याश्चञ्चलं लोचनाञ्चलम् ॥ ६ ॥
ओजः स्यात्प्रौढिरर्थस्य संक्षेपो वाऽतिभूयसः ।
रिपुं हत्वा यशः कृत्वा त्वदसिः कोशमाविशत् ॥ ७ ॥
सौकुमार्यमपारुष्यं पर्यायपरिवर्तनात् ।
स कथाशेषतां यातः समालिङ्ग्य मरुत्सखम् ॥ ८ ॥

---

स्यान्यभावारोपस्तादृशः सः । रसधर्मान्तःप्रवेशनादेरर्थादावारोपाल्लक्ष्यमपीदमेव । रसश्चात्र शृङ्गारादिः ॥ ५ ॥

माधुर्यमाह—माधुर्यमिति । पुनःशब्दस्तुशब्दार्थे । माधुर्यं तु उक्तस्य काव्यस्य चारुतावहं चित्तद्रवीभावजनकं वैचित्र्यं माधुर्यमित्यर्थः । द्रवीभावश्च रसाद्याकारानुविद्धानन्दोद्बोधरूपः स्वाभाविकाद्यनेकविधः । स च शृङ्गारकरुणाशान्तजन्य इति प्रकाशः । द्रवीभाव एव माधुर्यं रचनाजन्यं चेति दर्पणकृत् । रचना तु टवर्गं विना वर्गान्त्यानां वर्ग्यमूर्धस्थितिरूपा अन्यतो बोध्या । उदाहरति—वयस्येति । अत्र चञ्चलमित्यादौ ञकारस्य वर्ग्यमूर्धस्थता स्फुटैव । अत्र पश्येति चलमिति च द्विरुक्त्या पुनःशब्दो यथाश्रुत एवेति मूलकृत्संमतमिति प्रतीयते तथा च यथाकथंचित्पुनरुक्तस्य चारुतावहमित्याद्यर्थः ॥ ६ ॥

ओजोगुणमाह—ओज इति । अर्थस्येत्यस्य मध्यमणिन्यायेनान्वयः । या अर्थस्य प्रौढिः, असता केनचिदुत्कर्षकरूपेण वर्णनमनाश्रयस्याश्रयत्वेन कथनमिति यावत्, सा अर्थनिष्ठमोजः । यो विस्तृततरार्थसंक्षेपः स शब्दनिष्ठमोजः । उभयमुदाहरति—रिपुमिति । हननकर्तृत्वानाश्रयस्य करणस्य खड्गस्य तदाश्रयत्वरूपकर्तृत्वेन वर्णनादाद्या । संक्षेपस्तु स्फुट एव । 'ओजश्चित्तस्य विस्ताररूपदीप्तत्वमुच्यते । वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥' सोऽपि (रचनायाम्?) । रचना च माधुर्यवट्टवर्गसहिता समासबहुला इति प्रकाशदर्पणादयः । उदाहरणं तत एव बोध्यम् ॥ ७ ॥

सौकुमार्यमाह—सौकुमार्यमिति । अमङ्गलशब्दपरित्यागेन तत्पर्यायशब्दप्रयोगः सौकुमार्यम् । पर्यायपरिवृत्त्या पारुष्याभावस्तदिति तु वाच्यार्थः । उदाहरति—स इति । अग्नौ प्रविश्य मृत इत्यस्यार्थस्य पर्यायेणात्र कथनम् । तथोक्तौ तु झटित्यमङ्गलप्रतीतेः पारुष्यम् । वस्तुतोऽयमश्लील-

SGDF
Sri Gargeshwari Digital Foundation

**उदारता तु वैदग्ध्यमग्राम्यत्वात् पृथङ्मता ।**
**मानं मुञ्च प्रिये किंचिल्लोचनान्तमुदञ्चय ॥ ९ ॥**
**शृङ्गारे च प्रसादे च कान्त्यर्थव्यक्तिसंग्रहः ॥**
**अमी दश गुणाः काव्ये पुंसि शौर्यादयो यथा ॥ १० ॥**

---

त्वाभावो न गुणान्तरमिति कश्चित् । मरुत्सखोऽग्निः । तथाच पारुष्यमत्र न वर्णकृतं किं त्वमङ्गलत्वरूपमिति बोध्यम् । अन्ये तु प्रविश्य मृत इत्यस्य तत्र प्रवेशेन वर्णकृतपारुष्यस्यैव तत्र सत्त्वेन तदभाव एवात्र विवक्षित इत्याहुः ॥ ८ ॥

उदारतामाह—उदारतेति । वैदग्ध्यं विदग्धोक्तत्वं तदेवोदारता । सा च न ग्राम्यत्वाभावेऽन्तर्भूतेत्याह—अग्राम्येति । तथाच तदपेक्षया भिन्नेत्यर्थः । उदाहरति—मानमिति । अत्र विकासयेति तादृशं लोकयाऽधुनेति वोक्तावपि ग्राम्यत्वाभावोऽस्ति, उदारता तु न । सा तु लोचनान्तमित्यादिनैवेति ततो भेद आवश्यक इति भावः । दर्पणस्तु अविकटत्वमुदारता तच्च पदानां नृत्यत्प्रायत्वं तच्चौजस्यैवान्तर्गतमित्याह । व्यङ्ग्योत्तयर्थप्रत्यायकत्वं तत्त्वमिति तु दण्डी ॥ ९ ॥

एवमष्टौ गुणानभिधाय वामनोक्तदशगुणान्तर्गतकान्त्यर्थव्यक्त्योः पृथक् कचिदन्तर्भावं दर्शयन् अष्टौ गुणान् दृढीकरोति—शृङ्गारे चेति । कचिच्छृङ्गारादाविति पाठः । कर्तुरधिकरणत्वविवक्षया सप्तमी । कान्तेः शृङ्गारेण संग्रहोऽर्थव्यक्तेः प्रसादेनेत्यर्थः । नन्वत्र दीप्तिः कान्तिरुक्तोदाहृता च प्रेयान्सायमित्यादौ, तत्रेर्ष्यानुभावस्यौत्सुक्यानुभावस्य च दीप्तेर्वर्णनादेवं च विरोध इति चेन्न । तावतापि शृङ्गारमहिम्नोऽनतिक्रमात् । नहि तत्र शृङ्गारो न प्रतीयते । यद्वा कान्तिरुज्ज्वलत्वं तच्च दीप्तरसत्वमतो रसान्तर्गतिः । अर्थव्यक्तिः प्रसाद एव उभयोरकष्टेनार्थप्रतीतिस्वरूपत्वात् । प्रसिद्धिविरोधाभावः कान्तिः, निषिद्धलाक्षणिकरूपनेयार्थत्वाभावोऽर्थव्यक्तिरिति तु दण्डी । उदाहरणे अन्यत्र बोध्ये । गुणसंख्यामुपसंहरति—अमी इति । दशेति वामनाभिप्रायेण स्वरीत्या तु अष्टावेव । तदुक्तिफलं तु नैतेषु न्यूनताऽसांकर्यात्, न वा कण्ठाभरणोक्तत्वाच्चतुर्विंशतिस्तेषामत्रैवान्तर्भावात् । तथाहि—निरन्तरैकवर्णावृत्तिरनुप्रासः व्यवधाने तु शब्दश्लेष इति तु तयोः संकरः । माधुर्यलाटानुप्रासयोश्च न सः, तत्राभिप्रायस्य बीजत्वात् माधुर्ये त्वतिशयमात्रविवक्षाया मूलत्वात् । एव-

SGDF
Sri Gargeshwari Digital Foundation

तिलकाद्यमिव स्त्रीणां विदग्धहृदयङ्गमम् ।
व्यतिरिक्तमलङ्कारं प्रकृतेर्भूषणं गिराम् ॥ ११ ॥
विचित्रलक्षणो न्यासो निर्वाहः प्रौढिरौचिती ।
शास्त्रान्तररहस्योक्तिः संग्रहो दिक् प्रदर्शिता ॥ १२ ॥

---

मन्यत्रापि बोध्यम् । एवं तेषामन्तर्भावोऽपि यथासंभवमत्रैवेति बोध्यम् । गुणालंकारविभागायात्र दृष्टान्तमाह—पुंसीति । यथा शौर्यकातरत्वादयो गुणा नियताः पुरुषधर्मास्तथा श्लेषादयो गुणाः काव्यधर्माः । तान्विना न काव्यत्वमिति भावः ॥ १० ॥

अत एव भूषणरूपमलङ्कारं सदृष्टान्तमाह—तिलकेति । यथा स्त्रीणां प्रकृतेः शरीराद्व्यतिरिक्तं भिन्नं तिलकाद्यं भूषणमेवं गिरां प्रकृतेः काव्याद्भिन्नमलङ्कारं श्लेषोपमादि भूषणमस्तीति वाच्योऽर्थः । विदग्धहृदयङ्गममित्युभयत्र विशेषणं, प्रकृतेरिति षष्ठ्यन्तम् । व्यतिरिक्तमित्यत्र गुणेभ्य इति शेषपूरणमिति कश्चित् । तथा च तिलकाद्यलङ्कारः शरीरापेक्षया भिन्नः सन् शरीरशोभाजनको न तु शरीरधर्मो यथा तथानुप्रासोपमादयोऽलङ्कारा इति भावः । तथाच काव्यधर्मत्वं गुणत्वं, काव्यशोभाधायकत्वमलङ्कारत्वमिति भेदः । प्रकाशे तु गुणानां न काव्यधर्मत्वम्, अद्रावत्र प्रज्वलत्यग्निरुच्चैरित्यादावोजोगुणसत्त्वेऽपि तदयोगात् । अतो रसधर्मत्वं गुणत्वं काव्यधर्मत्वमलङ्कारत्वमिति भेदः । तत्रापि माधुर्यौजःप्रसादाख्यास्त्रय एव गुणाः । शृङ्गारकरुणशान्तधर्मो माधुर्यं, वीरबीभत्सरौद्रधर्म ओजः, सर्वरसधर्मः प्रसादः । श्लेषादयः केचिदत्रैवान्तर्भूताः । समतादयस्तु दोषाभावरूपा न गुणा इत्युक्तम् । क्वचिदलङ्कारादिति पाठः । तत्र पक्षे गुणानुक्त्वा ततोऽलङ्कारानुप्रासोपमादितश्च भिन्नं भूषणमाह—तिलकेति । यथा स्त्रीणां प्रकृतेः शरीरस्य तिलकाद्यं भूषणमलङ्कारात्ताटङ्कादेर्भिन्नं तथा गिरां प्रकृतः काव्यस्यानुप्रासोपमादितो भिन्नं तादृशं भूषणमस्तीत्यर्थः । यद्वा प्रकृतेरिति दार्ष्टान्तिके एवान्वेति सान्निध्यात् । तत्रानुपयोगाच्च । अर्थः स एव । युक्तश्चायं पाठः । अन्यथाऽस्य पद्यस्य वैयर्थ्यापत्तेः । तिलकाद्यमिव हारादिवदिति दृष्टान्तद्वयासङ्गत्यापत्तेश्चेति दिक् ॥ ११ ॥

ननूभयतो भिन्नं किं भूषणमत आह—विचित्रेति । विचित्रं लक्षणं सूत्रं यत्र एतादृशो यः प्रयोगः स न्यासः । विचित्रलक्षणन्यास इति पाठे

SGDF
Sri Gargeshwari Digital Foundation

**महादेव इति पूर्ववत् । चतुर्थस्तेनासाविति विशेषः ।**

इति चन्द्रालोकालङ्कारे गुणनिरूपणो नाम चतुर्थो मयूखः ॥

---

तादृशस्य प्रयोगस्य न्यास इत्यर्थः । यथा 'उदरंभरयश्चकोराः' इत्यादौ । निर्वाहो यथा—'सोऽहमाजन्मशुद्धानाम्' इत्यादौ । उदाहरणे लक्ष्याभिधायिशब्दप्रयोगः प्रौढिः । यथा—'मन्दाक्रान्ता विसृजति रसं नेक्षुयष्टिः समग्रम्' इत्यत्र लक्ष्याया मन्दाक्रान्तायाः । औचिती यथा—'वागर्थाविव' इत्यादौ । अत्र नतिफलत्वाभ्यां प्रस्तुताभ्यां वागर्थाभ्यां सह नमस्ययोरुपमानोपमेयभावस्यौचित्यात् । शास्त्रान्तररहस्योक्तिर्यथा—ज्याकृष्टबद्धखटकामुखेत्यादौ संगीतशास्त्रसिद्धस्याङ्गुलिविन्यासविशेषस्य खटकामुखेत्यनेनोपादानात् । संग्रहो यथा—शृङ्गारी गिरिजानने इत्यादौ । अत्र शृङ्गारादीनां नवानां संग्रहः । इदं न परिगणनमित्याह—दिगिति । इयं मया दिक्प्रदर्शितेत्यर्थः । तथाच भूषणान्तरमप्यस्तीति भावः । इति द्वितीयपक्षेऽर्थः । आद्यमते तु दशत्वोक्तिदार्ढ्याय प्राचोक्तं गुणाधिक्यं पाठभेदेन निराचष्टे—वैचित्र्यलक्षणमिति । वैचित्र्यस्य ज्ञापकमित्यर्थः । व्यासादयः प्राचीनोक्ता न गुणाः किं तु वैचित्र्यमात्रज्ञापका इति भावः । पदार्थस्य वाक्येनाभिधानं व्यासः । निर्वाहो वर्णसमता । अन्यार्थकपदेन लक्ष्यनिर्देशः प्रौढिः । कविसंकेतप्रसिद्ध्या वर्णनमौचिती । शास्त्रान्तररहस्योक्तिः प्रागुक्तैव । संग्रहः समावेशः वाक्यार्थे पदाभिधानरूपः । दिक्प्रदर्शिता दिक्प्रदर्शनं (साभिप्रायोक्तिविन्यास इति?) । कण्ठाभरणे तु चतुर्विंशतिर्गुणा वाक्यवाक्यार्थोभयानष्टत्वेन तुल्या एव उक्ताः—'श्लेषः प्रसादः समत्वं माधुर्यं सौकुमार्यम् अर्थव्यक्तिः कान्तिः उदारता उदात्तत्वम् ओज और्जित्यम् अभीष्टत्वं सुशब्दता समाधिः सौक्ष्म्यं गाम्भीर्यं विकासः संवृतिः संमितत्वं भाविकत्वं गतिः रीतिः उक्तिः प्रौढिः' इति । तेषामपि यथासंभवमेष्वेवान्तर्भावो बोध्य इति ॥ १२ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां चतुर्थो विलासः ।

---

१ 'फलेग्रहिरात्मंभरिश्च' इति पाणिनीयसूत्रं तस्माद्विचित्रं लक्षणम् 'आत्मोदरकुक्षिषु' इति चान्द्रलक्षणं यत्र तत्त्वात्तथेत्यर्थः । २ 'सोचिलोपेचेत्पादपूरणम्' लोपेसत्येवेत्यवधारणेन निर्वाहः ।

SGDF
Sri Gurgeshwari Digital Foundation

# पञ्चमो मयूखः ।

## अथालंकाराः

**शब्दार्थयोः प्रसिद्ध्या वा कवेः प्रौढिवशेन वा ।**
**हारादिवदलङ्कारः सन्निवेशो मनोहरः ॥ १ ॥**

शिष्यावधानाय गुणान्निरूप्य क्रमप्राप्तानलङ्कारान्निरूपयितुं प्रतिजानीते—अथालङ्कारा इति । प्रतिपाद्यन्ते इति शेषः ।

तत्रादौ तत्सामान्यलक्षणमाह—शब्दार्थयोरिति । जात्यभिप्रायं द्विवचनम् । वाक्यवाक्यार्थपरौ वा शब्दार्थशब्दौ । कवेरित्यस्य मध्यमणिन्यायेनान्वयः । शब्दानामर्थानां च यो मनोहरश्चमत्कृतिजनकः संनिवेशः समभिव्याहारः स यथाक्रमं शब्दगतोऽर्थगतश्चालङ्कारः । स च द्विधा कवेरालङ्कारिकस्य प्रसिद्ध्या तस्य प्रौढिकल्पनया च भवतीत्यर्थः । अत्र कश्चित् संनिवेश इत्युक्तेस्तद्रूप एवायं न तु पुंसः कुण्डलादिवत्पृथग्भूतः अनुप्रासादेः शब्द एवान्तर्भावात् । उपमादेरर्थान्तर्गतत्वात् । एवं च हारादिवदिति दृष्टान्तो न सर्वांशेऽपि तु रमणीयतामात्रे । गुणादेर्मनोहरसंनिवेशरूपत्वेऽपि नालङ्कारत्वं कवीनां तत्त्वेन तेषामप्रसिद्धेर्भेदादिति । अन्ये तु हारादिवदित्यनेन काव्यस्वरूपबहिर्भाव उक्तः तेन गुणाद्भेदः सूचितः । अत एव पूर्वविरोधोऽपि नेत्याहुः । अत्र पक्षे संनिवेश इत्यस्य तत्प्रतिपाद्य इत्यर्थो बोध्यः । न केवलं कविप्रसिद्ध्यैवालङ्कारत्वमपि तु कविप्रौढिकल्पितानां पूर्वाचार्यपरिगणितानां केषांचिदप्रसिद्धानामपीत्याशयेनोक्तम्—कवेः प्रौढीति । एवं च केचिदलङ्कारत्वेन प्रसिद्ध्याऽलङ्काराः केचिदतथाभूता अपि प्राचोक्ताः । केचिन्मयापि प्रौढ्या उपनिबद्धा इति भावः । अलङ्कारे शाब्दत्वं शब्दज्ञानान्वयव्यतिरेकानुविधायित्वम् । आर्थत्वं चार्थबोधान्वयव्यतिरेकानुविधायित्वम् । तेन वक्रोक्तिश्लेषयोर्न शब्दालङ्कारत्वम् अर्थानवबोधे तदबोधात् । अनुप्रासादीनां त्वर्थानवबोधेऽपि शब्दज्ञाने सति प्रतीयमानत्वाच्चमत्कारजनकत्वाद्युक्तं शब्दालङ्कारत्वम् । यद्यपि समासोक्तिपरिकरादीनामपि शब्दज्ञानान्वयव्यतिरेकानुविधानतौल्यं तथापि न तन्मात्रान्वयव्यतिरेकानुविधानमिति न तेषां शब्दालङ्कारत्वमिति बोध्यम् ॥ १ ॥

SGDF
Sri Gargeshwari Digital Foundation

स्वरव्यञ्जनसंदोहव्यूहा मन्दोहदोहदा ॥
गौर्जगज्जाग्रदुत्सेका छेकानुप्रासभासुरा ॥ २ ॥

अथोद्देशक्रमेण वक्तव्यालङ्कारेष्वादौ वक्तव्यशब्दालङ्कारविशेषेषु प्रथमं छेकानुप्रासमाह—स्वरेत्यादि । स्वरयुक्तानि यानि व्यञ्जनानि तेषां स्वरव्यञ्जनयोर्वा यः संदोहः साम्यं स्तोमो वा तस्य व्यूहः आवृत्तिर्यस्या सा गौर्वाणी, छेका विदग्धास्तत्संबन्धी योऽनुप्रासो रसानुगुणो न्यासस्तेन भासुरा प्रसिद्धा शोभना वा भवतीत्यर्थः । किंभूता मन्दः सकृत् य ऊहो ज्ञानं तद्दोहदरूपा तज्जनिका । यद्वा अमन्दोहेति छेदः । पुनः किंभूता जगति जाग्रत् उत्सेक उत्कर्षो यस्याः सेत्यक्षरार्थः । अत्र केचित् । अनु एकदाकथनोत्तरं यत्र ते एव वर्णाः प्रकर्षेणास्यन्ते सोऽनुप्रासः विदग्धसंबन्धित्वाच्छेकानुप्रासत्वम् । स च स्वरस्तोमावृत्त्या व्यञ्जनस्तोमावृत्त्योभयस्तोमावृत्त्या च भवति । इदमेव च लक्ष्यं दोहेत्यस्यान्त्यावृत्तेः सत्त्वात् जगदित्यादौ स्वरभेदेऽपि जकारगकारव्यञ्जनस्तोमावृत्तेः, त्सेकाछेकेत्यादावेकारककाराकाररूपस्तोमावृतेश्च सत्त्वात् । तथाच केवलव्यञ्जनावृत्तौ वृत्त्यनुप्रासः आनुपूर्वीविशेषविशिष्टनानावर्णावृत्तिर्यत्र तत्राप्ययमित्याहुः । अन्ये तु आद्यार्थाशयेन—अत्र स्वरेत्यविवक्षितम् । सकृदिति शेषः । तेन सकृद्व्यञ्जनसाम्यावृत्तिः छेकानुप्रास इत्याशयः । दोहव्यूहेत्यत्र स्वरवैसादृश्येऽपि हरूपव्यञ्जनसाम्याद्दोहदोहेत्यत्रापि सकृत्तदावृत्तेर्लक्ष्यमपीदमेव । 'वर्णसाम्यमनुप्रास इति सामान्यलक्षणम्' इति क्वचिदेतदग्रे मूले पाठः । साम्यं च व्यञ्जनैरेव न स्वरैस्तेन स्वरवैसादृश्येऽपि स्पन्दमन्दीत्यादावनुप्रासत्वाक्षतिः । वृत्त्यनुप्रासे तु असकृत्त्वं निविष्टमत्र तु सकृत्त्वमिति तयोर्भेद—इत्याहुः । वस्तुतस्तु स्वरश्च व्यञ्जनं च तयोः समूहश्च तेषामावृत्तिर्यत्र सा अमन्दानां विदुषामूहस्तर्क एव दोहदः प्रियं यस्या इत्यर्थः । एवं च स्वरावृत्तिर्व्यञ्जनावृत्तिस्तत्समूहावृत्तिश्च यत्र तत्रायम् । अस्ति चात्रैव । स्वरव्यञ्जनसमित्यत्र स्वरावृत्तेर्दोहव्यूहेत्यत्र व्यञ्जनावृत्तेर्दोहदोहेत्यत्र तत्समूहावृत्तेश्च सत्त्वात् । एवमुत्तरत्रापि बोध्यम् । वृत्त्यनुप्रासे तु अन्यतरस्यासमाप्त्यावृत्तिर्न त्रितयसत्त्वेति भेदः । नन्वेवमनुप्राससामान्यलक्षणं किमत आह—वर्णेति । अचो हलो वा तत्समूहस्य वा सकृदसकृद्वा साम्यमित्यर्थः । इदं सर्वत्रास्तीति स्फुटमेवेति बोध्यम् ॥ २ ॥



SGDF
Sri Gargeshwari Digital Foundation

आवृत्तवर्णसंपूर्णं वृत्त्यनुप्रासवद्वचः ।
अमन्दानन्दसन्दोहस्वच्छन्दास्पदमन्दिरम् ॥ ३ ॥
लाटानुप्रासभूर्भिन्नाभिप्राया पुनरुक्तता ।
यत्र स्यान्न पुनः शत्रोर्गर्जितं तज्जितं जितम् ॥ ४ ॥
श्लोकस्यार्धे तदर्धे वा वर्णावृत्तिर्यदि ध्रुवा ।
तदा मता मतिमतां स्फुटानुप्रासता सताम् ॥ ५ ॥

---

वृत्त्यनुप्रासमाह—आवृत्तेत्यादि । आवृत्तवर्णेन संपूर्णं परिपूरितं वचो वृत्त्यनुप्रासवत् । वृत्तमादितः समाप्तिपर्यन्तं वर्तनं तदस्यास्तीति वृत्ती तस्यानुप्रासस्तद्विशिष्टम् । अमन्दो भूयान्य आनन्दस्तस्य संदोहः स्तोमः तस्य स्वच्छन्दं स्वतन्त्रं सामग्र्यन्तरनिरपेक्षमास्पदस्य स्थितेर्गृहम् । आस्पन्देति पाठेऽप्ययमेवार्थः । तेन असकृदेकवर्णावृत्तिर्वृत्त्यनुप्रास इति फलितं लक्षणम् । अमन्देत्यादौ केवलदकारादेरावृत्तेरासमाप्ति सत्त्वाल्लक्ष्यमपीदमेव ॥ ३ ॥

वर्णानुप्रासमुक्त्वा पदानुप्रासरूपं लाटानुप्रासमाह—लाटेति । भिन्नः अभिप्रायो यस्या ईदृशी या पुनरुक्तता अभिन्नार्थकपदावृत्तिः सा लाटानुप्रासभूः लाटानुप्रासाश्रयः लाटरूपदेशविशेषस्थविदग्धवल्लभत्वात्तदीयानुप्रासस्थानमिति यावत् । तेनाभिप्रायभेदेनाभिन्नार्थकपदावृत्तिः स इति लक्षणं सूचितम् । उदाहरणमाह—यत्रेति । यत्र शत्रोर्गर्जितं न पुनः स्यात्तज्जितं जितमित्यन्वयः । अत्र द्वितीयजितमित्यस्य सफलमित्यभिप्रायकत्वाल्लक्ष्यत्वम् ॥ ४ ॥

स्फुटानुप्रासमाह—श्लोकेत्यादि । श्लोकस्यार्धे अर्धार्धे पादे इति यावत् यदि वर्णावृत्तिर्ध्रुवा नियता आदित अन्तपर्यन्तमिति यावत् तदा मतिमतां सतां सुहृदां स्फुटानुप्रासता मता इष्टा । तत्रासंभवाशङ्कावारणाय मध्ये एवोदाहरणमाह—तदेत्यादि । पादे अत्र तकारमकारयोस्तथावृत्त्या लक्ष्यत्वम् । अयं च वर्णनिष्ठो न पदनिष्ठः । अयं स्तुत्यनुप्रासभेद इति दर्पणः । केचित्तु यो वर्णः प्रथमार्धावसाने स एव द्वितीयार्धावसाने इत्याद्यः पक्षः । चतुर्षु पादावसानेष्वेको वर्ण इत्यपर इति भेदमाहुः । वस्तुतस्तु तस्यार्धे नियतवर्णावृत्तिर्द्वेधा आदितः अन्तपर्यन्ता, पादावसाने स एव वेति । पादे सा तूक्तरूपैकैव । तत्र द्विती-

SGDF
Sri Gargeshwari Digital Foundation

उपमेयोपमानादावर्थानुप्रास इष्यते ।
चन्दनं खलु गोविन्दचरणद्वन्द्ववन्दनम् ॥ ६ ॥
पुनरुक्तप्रतीकाशं पुनरुक्तार्थसन्निभम् ।
अंशुकान्तं शशी कुर्वन्नम्बरान्तमुपैत्यसौ ॥ ७ ॥

---

योदाहरणं तूक्तमेव । आद्यपक्षे द्वितीयोदाहरणमर्धद्वयमपि, आद्ये वेत्यस्य द्वितीये तामित्यस्य तथा सत्त्वादिति बोध्यम् ॥ ५ ॥

अर्थानुप्रासमाह—उपेत्यादि । वर्णावृत्तिर्यदि ध्रुवा तदेति पूर्वतोऽनुवर्तते । उपमेयोपमानादौ यदि नियता वर्णावृत्तिस्तदार्थानुप्रास इष्यते इत्यर्थः । आदिना रूपकादिपरिग्रहः । उदाहरणमाह—चन्देत्यादि । गोविन्देति संबोधनं समस्तं वा, वन्दनं निश्चयेन चन्दनमिव भवति तापशामकत्वाद् आह्लादकत्वात् शैत्यकारकत्वात् चेत्यर्थः । नन्वेवं कथमस्य शब्दालङ्कारत्वम् । अथोपमेयोपमानादावित्यस्य तत्प्रतिपादकवाक्ये इत्यर्थेन वर्णावृत्तेः शब्दनिष्ठत्वेन तत्त्वमिति ब्रूषे तर्हि अर्थानुप्रासत्वानुपपत्तिरिति चेन्न, आशयानवबोधात् । तथाहि उपमेयोपमानादाविति विषयसप्तमी, तद्विषयिणी या तादृशवर्णावृत्तिर्ययैव स्वघटितबोध्ययोरुपमानोपमेयभावो न प्रागुक्तप्रकारेणेति यावत् सः अथानुप्रास इत्यर्थः । एवं सति अत्र चन्दनवन्दनयोर्बहुतुल्यवर्णकपदबोध्यत्वसादृश्येनैवोपमानोपमेयभावस्तेनावृत्तेस्तादृशार्थबोधकत्वादर्थानुप्रासत्वं तादृशार्थबोधनाय कल्पिते प्रत्यासन्ने 'वन्दनं चन्दनमिव' इति वाक्ये तादृशवर्णावृत्तेः सत्त्वेन तस्याः शब्दनिष्ठत्वाच्छब्दालङ्कारत्वमत एव नात्रच्छेकानुप्रासादिष्विव सामीप्यकृतश्चमत्कारस्तयोर्व्यवधानसत्त्वान्नापि स्फुटानुप्रास इव नियतवर्णावृत्त्या तदभावात् किं त्वर्थसान्निध्येन चारुता तच्चावृत्तेस्तथावाक्ये तत्प्रतीत्याऽस्तीति ध्येयम् ॥ ६ ॥

पुनरुक्तप्रतीकाशमाह—पुनरित्यादि । पुनरुक्तः अर्थो यस्मिन् वाक्ये तत्तथा तत्सन्निभं तद्वद्भासमानं यद्वाक्यं तत्पुनरुक्तप्रतीकाशमिति लक्ष्यनिर्देशः । भिन्नार्थकत्वे सति एकार्थपदवदाभासमानत्वं तत्त्वम् । वीप्सावारणाय भिन्नार्थकेति । उदाहरणम्—अंश्विति । अंशुकान्तः अंशुभिः कान्तं सुन्दरं वा कुर्वन्नसौ प्रसिद्धः शशी अम्बरान्तमाकाशान्तम् उपैति गच्छति । अत्रांशुकान्तमम्बरान्तमिति लक्ष्यम् ।

SGDF
Sri Gargeshwari Digital Foundation

आवृत्तवर्णस्तवकं स्तवकन्दाङ्कुरं कवेः ।
यमकं प्रथमा धुर्यमाधुर्यवचसो विदुः ॥ ८ ॥
काव्यवित्प्रवरैश्चित्रं खड्गबन्धादि लक्ष्यते ।
तेष्वाद्यमुच्यते श्लोकद्वयीसज्जनरञ्जिका ॥ ९ ॥
कामिनीव भवत्खड्गलेखा चारुकरालिका ।

---

अनयोरर्थभेदेऽपि वसनान्तरूपैकार्थस्यापाततो भानादिति बोध्यम् । अस्य वाक्यानिष्ठत्वाच्छाब्दत्वम् । यद्यप्यत्रार्थबोधान्वयव्यतिरेकानुविधायित्वादर्थालङ्कारत्वमुचितं तथाप्यापाततस्तत्त्वमुक्तमिति बोध्यम् ॥ ७ ॥

यमकमाह—आवृत्तेत्यादि । आवृत्तः वर्णस्तबको वर्णसमूहोऽर्थात्समो यत्र तद्यमकं प्रथमा मुख्याः पूर्वकवयो वा विदुः । किंभूतं कवेः स्तवः स्तुतिस्तद्रूपो यः कन्दो बीजं तस्य वा यः कन्दः आरम्भस्तस्याङ्कुरं प्रकाशकम् । किंभूतास्ते माधुर्यं वचसि येषां ते धुर्या धुरीणाश्च ते च ते यद्वा धुर्यम् आद्यं माधुर्यं यस्य तादृशं वचो येषां त इत्यर्थः । एतेन भिन्नार्थकवर्णसमूहावृत्तिर्यमकं, वीप्सावारणाय भिन्नार्थकेतीति सूचितम् । अत्र भिन्नार्थकत्वमेकार्थकभिन्नत्वम् । आवृत्त्यव्यवधानं त्वर्थलभ्यम् । अत्र स्तवकं स्तबकं माधुर्यमाधुर्येत्येव लक्ष्यम् । इदं चान्तादियमकं यमकस्यान्ये बहवो भेदास्ते ग्रन्थान्तरादवसेयाः ॥ ८ ॥

चित्रालङ्कारमाह—काव्यविदिति । काव्यज्ञश्रेष्ठैश्चित्राख्यं खड्गबन्धादि लक्ष्यते इत्यर्थः । यत्र संनिवेशविशेषेण न्यस्ता वर्णाः खड्गाद्याकारं प्रकटयन्ति तत्खड्गबन्धादि चित्रकाव्यमिति यावत् । चित्रमेव तत्रालङ्कारः । तथाच विलक्षणरचनाकत्वं चित्रकाव्यत्वमिति सामान्यलक्षणं बोध्यम् । तच्च खड्गबन्धादिभेदेनानेकविधम् । तत्र खड्गबन्धस्येदमेव पद्यद्वयं लक्ष्यम् । अनेन पद्यद्वयेन स्थलविशेषरहिताक्षरेण खड्गबन्धो भवति स लेखनक्रमो यत्सङ्ख्याकवर्णावृत्त्यास्य खड्गबन्धत्वं तदपि ग्रन्थान्तरात् ज्ञेयम् । तदाह—तेष्वाद्यमिति । तेषु खड्गबन्धादिषु आद्यं खड्गबन्धाख्यं काव्यमुच्यते इत्यर्थः ॥ ९ ॥

कामिनीति । हे राजन्नियं भवत्खड्गलेखा कामिनीवाभवदित्यन्वयः । तत्र साधारणानि विशेषणानि—श्लोकेत्यादि । तत्र कामिनीपक्षे चारु करालिकं [illegible]ललाटं यस्याः सा कार्श्मीरस्य कुङ्कुमस्य सेको यस्यां सा

SGDF
Sri Gargeshwari Digital Foundation

काश्मीरसेकारक्ताङ्गी शत्रुकण्ठान्तिकाश्रिता ॥ १० ॥
उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
हृदये खेलतोरुच्चैस्तन्वङ्गीस्तनयोरिव ॥ ११ ॥
उपमानोपमेयत्वे यत्रैकस्यैव जाग्रतः ।
इन्दुरिन्दुरिवेत्यादौ भवेदेवमनन्वयः ॥ १२ ॥

---

तज्जलसेकेन कृता वाऽऽरक्ताङ्गी तेनारक्ताङ्गी वा । शत्रोः कण्ठसमीपस्था एवं च कामिनी शत्रोरिव बोध्या । खड्गलतापक्षे चारुश्चासौ करालिका तीक्ष्णा च काश्मीरसेकादारक्ताङ्गी तेन सिक्तवदारक्ताङ्गी वा । शत्रुकण्ठेति प्राग्वत् । प्रकृतश्लोकद्वयीव सज्जनाः सैव वा सज्जनास्तेषां रञ्जिका यथा कामिनी सज्जनानां रसिकानां रञ्जिका तथेयं श्लोकद्वयीरञ्जिकेत्यर्थः । केचित्तु, तद्वदियं प्रकृतश्लोकद्वयीव सज्जनरञ्जिकाऽभवदित्यर्थः । तत्र कामिनीपक्षे सज्जनाः रसिकाः खड्गलतापक्षे ते साधवः श्लोकद्वयीपक्षे ते सहृदया इति बोध्यम् । चार्वित्यादि तु प्राग्वदित्याहुः (?) ॥ १० ॥

अथ क्रमप्राप्तार्थालङ्कारान्विवक्षुर्बहुशोऽलङ्कारव्यापित्वात्प्रथममुपमालङ्कारमाह—उपमेति । यत्र काव्ये हृदये खेलतोरुन्नतयोस्तन्वङ्गीस्तनयोरिव द्वयोर्भिन्नयोः सादृश्यलक्ष्मीः चमत्कारजनकं यत्सादृश्यमुल्लसति वाच्यं भवति स स्वाश्रयबोधकतासंबन्धेन तत्काव्यनिष्ठ उपमालङ्कारः। उत्तरार्धेन सादृश्ये चमत्कारजनकत्वविशेष उक्तः । उदाहरणमप्युक्तम् । द्वयोरित्युपमेयस्य स्तनयोरित्युपमानसादृश्यप्रतीतेः । उच्चैरित्यस्य उन्नतयोरित्यर्थ उक्तः । अत्र द्वयोरिति सागरः सागरोपम इत्याद्यनन्वयव्यावृत्तये, उल्लसतीत्यलङ्कारध्वनिव्यावृत्तये, लक्ष्मीरिति चमत्कारानाधायकवस्तुत्वप्रमेयत्वादिकृतसादृश्यव्यावृत्तये । तेनान्यनिरूपितमन्यनिष्ठचमत्काराधायकं वाच्यं सादृश्यमलङ्कार इत्यर्थः फलितः । अस्याः पूर्णादिभेदास्तु ग्रन्थान्तरादवसेयाः ॥ ११ ॥

अनन्वयं लक्षयति—उपमानेति । उपमानं च उपमेयं च उपमानोपमेये तयोर्भावावुपमानोपमेयत्वे यद्वा तयोर्भावस्तत्त्वं तच्च तच्चेत्येकशेषस्ते । द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं संबन्धः एतदर्थध्वननायैव द्विवचनम् । तथा चोपमानत्वोपमेयत्वे इत्यर्थः । एकस्येत्युपमाव्यवच्छेदाय तस्या भिन्नार्थकत्वात् । एवकारेण भिन्नशब्दबोध्यत्वव्यवच्छेदः । अतोऽस्या वद-

SGDF
Sri Gurgeshwari Digital Foundation

पर्यायेण द्वयोस्तच्चेदुपमेयोपमा मता ।
धर्मोऽर्थ इव पूर्णश्रीरर्थो धर्म इव त्वयि ॥ १३ ॥
विख्यातस्योपमानस्य यत्र स्यादुपमेयता ।
इन्दुर्मुखमिवेत्यादौ स्यात्प्रतीपोपमा तदा ॥ १४ ॥
उपमाने तु लीलादिपदाढ्ये ललितोपमा ।

---

नमिव वक्रमित्यादौ नानन्वयः । जाग्रत इत्यस्य स्फुटं स्त इत्यर्थः । तेनेन्दुर्नान्यसदृश इत्यादौ नातिप्रसङ्गः । तथा यत्रैकस्यामुपमिताविन्दुरिवेत्यादावेकशब्दबोध्यस्यैकस्योपमानत्वोपमेयत्वे वाच्यत्वेन स्तस्तत्र सत्यनन्वयो भवेदित्यर्थः । उपमानतावच्छेदकोपमेयतावच्छेदकसाधारणधर्मावच्छेदकैक्यविशिष्टापन्नैकोऽयमिति तत्रानन्वय इति यावत् । एकस्यामितिविशेषणादुपमेयोपमायां नातिप्रसञ्जनम् । अत एव न अन्वयः संबन्धोऽर्थाद्वर्ण्योपमाया यत्रैकोपमितौ तत्र सोऽनन्वय इत्यन्वर्थत्वमपि संगतम् । तथा चोपमासंबन्धाभाव एव स इति बोध्यम् । असंभवाशङ्कावारणाय मध्ये एव उदाहरणोपन्यास इन्दुरिति ॥ १२ ॥

उपमेयोपमामाह—पर्यायेणेति । तद् उपमानत्वमुपमेयत्वं च चेत् यदि द्वयोर्भिन्नयोः पर्यायेण वाक्यभेदेन न तु युगपत् तदा उपमेयस्योपमा उपमेयोपमा तद्रूपः अलङ्कार इष्ट इत्यर्थः । वाक्यभेदेन भिन्नयोः परस्परनिरूपितमुपमेयत्वं च सेति यावत् । उदाहरति—धर्म इति । अनन्वये द्वितीयसदृशव्यवच्छेदफलमत्र तु तृतीयसदृशव्यवच्छेद इति बोध्यम् । अस्या अपि उपमावत्पूर्णादिभेदा ऊह्याः ॥ १३ ॥

प्रतीपोपमां लक्षयति—विख्यातस्येति । चेदित्यनुवर्तते यदि यत्र काव्ये प्रसिद्धोपमानसंबन्ध्युपमेयत्ववर्णनं स्यात्तदा तत्रेन्दुर्मुखमिवेत्यादौ प्रतीपोपमा स्यादित्यर्थः । प्रसिद्धोपमानसंबन्ध्युपमेयत्ववर्णनं सेति यावत् । प्रसिद्धिवैपरीत्यादेव तस्यास्तत्त्वं, विख्यातस्येत्येतद्विशेषणाद् यत्र स्वकल्पितोपमानस्योपमेयत्वं तत्र न प्रतीपोपमालङ्कारः । इन्दुर्मुखमिति लक्ष्यं पूर्ववत् । इयं च वक्ष्यमाणप्रतीपापेक्षया भिन्ना उपमाया अत्र वाच्यत्वात् ॥ १४ ॥

ललितोपमां लक्षयति—उपमाने त्विति । उपमानं यत्र लीलादिपदेन संपन्नं तत्र ललितोपमेत्यक्षरार्थः । लीलादिपदसमभिव्याहृतोपमानवाचक-

SGDF Sri Gargeshwari Digital Foundation

त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ १५ ॥
अनेकार्थस्य युग्मस्य सादृश्यं स्तबकोपमा ।
श्रितोऽस्मि चरणौ विष्णोर्भृङ्गस्तामरसं यथा ॥ १६ ॥
स्यात्संपूर्णोपमा यत्र द्वयोरपि विधेयता ।
पद्मानीव विनिद्राणि नेत्राण्यासन्नहर्मुखे ॥ १७ ॥
यत्रोपमानचित्रेण सर्वथाप्युपरज्यते ।
उपमेयमयी भित्तिस्तत्र रूपकमिष्यते ॥ १८ ॥

---

पदेन यत्रोपमेये उपमानधर्मारोपस्तत्र ललितोपमेत्याशयः । तत्रोपमानोपमेययोरन्यतरत्रान्यतरधर्मारोपो ललितोपमेति फलितम् । अत एव न रूपकेऽतिव्याप्तिः तस्य तादात्म्यारोपरूपतया भेदात् । द्वितीयलक्ष्यमन्यतो बोध्यम् । वस्तुतस्तु उपमाने लीलादिपदेनाढ्ये युक्ते सेत्यर्थः । उपमेये उपमानलीलावर्णनं सेति यावत् । अत एव न तत्रातिप्रसङ्गः । एवं चैकविधैवेयमिति बोध्यम् । नेत्रयुगले नीलोत्पलगतलीलापदार्थारोपात् ॥१५॥

स्तबकोपमा लक्षयति—अनेकेति । द्वयोर्विशिष्टयोः सादृश्यं सेत्यर्थः । अत एव न पौनरुक्त्यम् । श्रित इति लक्ष्यम् । अत्र भृङ्गेण स्वस्य, तामरसेन चरणयोर्नोपमा किं तु विशिष्टेनेति स्तबकोपमात्वम् । अन्ये तु अर्थयुग्मस्योपमानोपमेयरूपस्यानेकस्य यत्सादृश्यं सा सा, उपमानोपमेयोरनेकत्वं यत्र तत्र सेति यावत् । लक्ष्ये स्वापेक्षया भृङ्गस्य श्रीपतिचरणापेक्षया तामरसस्योपमानत्वेनोपादानमिति तयोरनेकत्वमित्याहुः ॥१६॥

संपूर्णोपमां लक्षयति—स्यादिति । द्वयोरिति सप्तमी द्वयोः उपमानोपमेययोर्यत्रैकस्य धर्मस्य विधेयता वाच्यता तत्र संपूर्णोपमा स्यादित्यर्थः । एकधर्मत्वेनोपमानोपमेयभावो यत्र वाच्यस्तत्र सा इत्याशयः । विनिद्रत्वस्योभयसाधारण्याल्लक्ष्यत्वम् । अहर्मुखे प्रत्यूषे । यद्वा द्वयोरिति षष्ठी यत्र द्वयोरुपमानोपमेययोरपि विधेयता साधारणधर्मान्वयिता तत्र सा । लक्ष्ये उभयोरपि तदन्वयात्तत्त्वम् ॥ १७ ॥

रूपकं लक्षयति—यत्रेति । यत्रोपमानरूपेणोपमेयरूपा भित्तिः सर्वथापि स्वतादात्म्येनैवोपरज्यते आहार्यनिश्चयविषयीक्रियते तत्र रूपकमित्यक्षरार्थः । उपमानाभिन्नत्वेनोपमेयस्याहार्यनिश्चयो रूपकमिति फलितोऽर्थः । तत्रोपमानमेव चित्रमिति मयूरेतिसमासेन समस्ताभेदरूपकोदाहरणे

SGDF Sri Gargeshwari Digital Foundation

समानधर्मयुक्साध्यारोपात्सोपाधिरूपकम् ।
उत्सिक्तक्षितिभृल्लक्ष्यपक्षच्छेदपुरन्दरः ॥ १९ ॥
पृथक्कथितसादृश्यं दृश्यं सादृश्यरूपकम् ।
उल्लसत्पञ्चशाखस्ते राजते भुजभूरुहः ॥ २० ॥
स्यादङ्गयष्टिरित्येवंविधमाभासरूपकम् ।

---

उपमाने चित्रतादात्म्यस्य, उपमेयमय्येव भित्तिरिति स्वार्थमयटा व्यस्ताभेदरूपकोदाहरणे उपमेये भित्तितादात्म्यस्य चारोपाल्लक्ष्यमपीदमेव । यत्रोपमानोपमेययोर्भेदो न प्रतीयते तदिदमिति भावः । एतद्भेदास्तु अन्यत्र द्रष्टव्याः ॥ १८ ॥

सोपाधिरूपकं लक्षयति—समानेति । युगिति संपदादित्वाद्भावे क्विप् । समानधर्मयोगेन साध्यो यत्र प्रकृतारोपस्तस्मात्तत्र सोपाधिरूपकमनुपात्तोपमेयवृत्तिप्रकृतारोपनिर्वाहकोऽप्रकृतारोपस्तदिति यावत् । तथाच रूपणीयान्ते उपमानवाचकशब्दप्रयोगे रूपक मेव, रूप्यरूपकसाधारणधर्मान्ते तत्प्रयोगे तु तदिति फलितम् । अस्ति चोत्सिक्तेत्यादावुभयसाधारणधर्माभिधानोत्तरं पुरन्दर इति तत्प्रयोगः । तत्र चार्थभेदेनोभयसाधारणधर्मप्राप्तिः स्फुटैवेत्याशयेनोदाहरति । उन्मत्तभूधराभिन्ननृपसंबन्धिलक्ष्यभूतपक्षाभिन्नसहायच्छेदापादा(द)नभूतेन्द्र इत्यर्थः । अत्र क्षितिभृत एव क्षितिभृतः पक्ष एव पक्ष इत्यप्रकृतारोप एकवाचकानुप्रविष्टः प्रकृतपुरन्दरत्वारोपनिर्वाहकः । एतदेव परंपरितमित्युच्यते समानधर्मसंबद्धस्य साध्यस्योपमानस्यारोपात्कथनादित्यर्थ इति कश्चित् ॥ १९ ॥

सादृश्यरूपकमाह—पृथगिति । अत्रोभयत्र कर्मधारयः । दृश्यं रमणीयं प्रेय इति पाठेऽप्ययमेवार्थः । दृश्यं सादृश्यं यत्र पृथक्पदेन कथितं तत्र तत्सादृश्यरूपकमित्यर्थः । सदृशयोर्भावः सादृश्यमिति व्युत्पत्त्या आरोप्यारोपणीयधर्माणां यत्र शाब्दत्वं तत्र तदिति फलति । उदाहरति—उल्लसदिति । हे राजन् ते भुज एव भूरुहो वृक्षो राजत इत्यर्थः । किंभूतः उल्लसत्पञ्चशाखः । अत्र भुजे तरुत्वारोपोत्तरमेव पञ्चाङ्गुलीषु शाखात्वारोपसंभवः । अत एव पञ्चशाखत्वं साधर्म्यं पृथगुच्यते न तु सोपाधिरूपकवदिति ततो भेद इति भावः । इदमेव समस्तवस्तुविषयं सावयवमित्युच्यते ॥२०॥

आभासरूपकं लक्षयति—स्यादिति । अङ्गयष्टिरित्येवंविधमाभासरूपकं स्यादित्यन्वयः । अत्राङ्गे यष्टित्वारोपो न रम्य इत्याभासत्वं तत्र सदृद-

SGDF
Sri Gargeshwari Digital Foundation

अङ्गयष्टिधनुर्वल्लीत्यादि रूपितरूपकम् ॥ २१ ॥
परिणामोऽनयोर्यस्मिन्नभेदः पर्यवस्यति ।
कान्तेन पृष्टा रहसि मौनमेवोत्तरं ददौ ॥ २२ ॥
बहुभिर्बहुधोल्लेखादेकस्योल्लेखिता मता ।
स्त्रीभिः कामः प्रियैश्चन्द्रः कालः शत्रुभिरैक्षि सः ॥२३॥

---

यद्धृदयैकवेद्यम् । रूपितरूपकं लक्षयति—अङ्गेति । अन्वयः स्फुटः । 'अङ्गयष्टिधनुर्वल्लीमादाय कुसुमायुधः । जगज्जयति यासां ताः कथं न सरसाः स्त्रियः ॥' इत्यादौ अङ्गयष्ट्या धनुर्वल्लीत्वारोपः शाब्दः धनुष्ट्वारोप आर्थः । रूपितेनारोपेण रूपकमार्थ आरोप इति योगार्थसत्त्वात्तत् । अन्ये तु रूपकं द्विधा रूपकान्तरसहिष्णु तदसहिष्णु च । कुचकलशकोकयुगलमित्यादावेकरूपकस्यैव रम्यत्वादन्त्यम् । आद्यमत्रैव अङ्गधनुर्वल्लीमित्युक्ते विलिङ्गत्वेनारम्यत्वापत्तेः । तथाचाङ्गे यष्टित्वारोपेण धनुर्वल्लीत्वस्य तत्रारोप इति तत्संगतिः । तस्य तदनिर्वाहकत्वादेव सोपाधिरूपकतो भेदः । तथा च यत्र रूपकान्तरसहनं तत्रेदमित्याहुः । अत्र पद्ये एक एवालङ्कारो लक्ष्य इति तु प्राचः प्रमादः अङ्गयष्टिरित्यादेर्द्विरुपादानासंगतेरिति बोध्यम् ॥ २१ ॥

परिणामं लक्षयति—परिणाम इति । यस्मिन्काव्ये अनयोरारोप्यमाणारापविषययोरभेदः पर्यवस्यति क्रियान्वयेन भवति तत्र स परिणाम इत्यर्थः। आरोपविषयस्यारोप्यमाणात्मनैव क्रियान्वयः स इति यावत् । उदाहरति—कान्तेनेति । अत्र मौनस्य दानक्रियान्वय उत्तरात्मनैव न स्वात्मनेति भावः । यत्तु शरदागमकृत्—यत्र रूप्यरूपकयोर्व्यवधानेनाभिधानं स परिणामः । अस्ति च लक्ष्ये तत्र हि मौनोत्तरमित्यत्रेव नाभेदधीः किं तु मध्ये एवशब्देन व्यवधानाद्रूप्यरूपकयोर्वाक्यमहिम्ना विलम्बेनेति तत्पर्यवसानमिति भाव इति । तन्न, दृगब्जेनेति समासेऽव्याप्त्यापत्तेरिति दिक् ॥ २२ ॥

उल्लेखं लक्षयति—बहुभिरिति । अत्र बहुत्वमनेकत्वमुभयत्र । अधिकरणस्य शेषत्वविवक्षायां षष्ठी । तथा चैकस्मिन्नारोपविषयेऽनेककर्तृकोऽनेकरूपारोप उल्लेख इत्यर्थः । अत एककर्तृकरूपकपरिणामादिषु नातिप्रसङ्गः । वस्तुतस्तु बहुत्वं विवक्षितमेव । तथा चैकस्य बहुकर्तृको बहुविषयक एककर्तृको वा यो बहुप्रकारक उल्लेखस्तत्प्रकारकज्ञानविषयताकरणं तस्मात्सा

SGDF
Sri Gargeshwari Digital Foundation

अतथ्यमारोपयितुं तथ्यापास्तिरपह्नुतिः ।
नायं सुधांशुः किं तर्हि व्योमगङ्गासरोरुहम् ॥ २४ ॥
पर्यस्तापह्नुतिर्यत्र धर्ममात्रं निषिध्यते ।
नायं सुधांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ॥ २५ ॥
भ्रान्तापह्नुतिरन्यस्य शङ्कया[1] तथ्यनिर्णये ।

---

मतेत्यर्थः । तत्स्वरूपं तु तदारोप एवेति बोध्यम् । उदाहरति—स्त्रीभिरिति । स वर्ण्यो राजा स्त्र्यादिभिरेवं दृष्ट इत्यर्थः । अत्र स्त्रीप्रियशत्रुभिः कामत्वचन्द्रत्वकालत्वारोपात्तत्त्वं, तदारोपनिमित्तानि स्फुटान्येवेति भावः । द्वितीयोदाहरणं तु अकृशं कुचयोरित्यादि बोध्यम् । अस्य भेदान्तरमन्यतोऽवगन्तव्यम् ॥ २३ ॥

अपह्नुतिमाह—अतथ्यमिति । तथ्यधर्मनिषेधपूर्वकोऽतथ्यधर्मारोपोऽपह्नुतिः । निषेधपूर्वकत्वादेवास्य रूपके नातिव्याप्तिः । वस्तुतस्तु तत्रैव शाब्दातथ्यधर्मारोपफलकतथ्यधर्मनिरासः सेति न कोऽपि दोषः इति बोध्यम् । उदाहरति—नायमिति । अयं प्रसिद्धचन्द्रश्चन्द्रो न किं तु तदित्यर्थः । अत्रातथ्यसरोरुहत्वारोपाय विद्यमानतथ्यचन्द्रत्वनिषेधः । अत्र तथ्यत्वं न प्रमाविषयत्वं किं तु निश्चयविषयत्वं तेन, तदर्थं कविकल्पितधर्मनिषेधेऽप्ययमेव यथाऽविदितसुखदुःखमित्यादावित्याद्यन्यतोऽवगन्तव्यम् ॥ २४ ॥

पर्यस्तापह्नुतिमाह—पर्यस्तेति । यत्र प्रकृतधर्मिणि विद्यमाने एव धर्ममात्रं धर्मस्यैव निषेधस्तत्र सेत्यर्थः । धर्मिणि धर्मनिषेधपूर्वं तद्धर्मस्यान्यत्रारोपः पर्यस्तापह्नुतिः, तद्धर्मस्यान्यत्र धर्मिण्यारोपाय प्रकृतधर्मिणि धर्मनिषेधः सेति यावत् । पूर्वत्रान्यधर्मारोपोऽत्रेत्यार्थिकधर्मिनिषेधोऽपि प्रकृते तु प्रकृतधर्मिणि निषिद्धधर्मस्यैवान्यत्रारोप इति धर्मिसत्तास्तीति भेदः । उदाहरति—नायमिति । अयं प्रसिद्धचन्द्रश्चन्द्रो न किं तु प्रेयसीमुखं सुधांशुरित्यर्थः । न चान्यत्रारोपे धर्मनिषेधः कथमिति वाच्यम् । प्रकृतधर्मिधर्मत्वनिषेधे एव तात्पर्यात् एतदर्थमेव मात्रपदं, तस्य चोक्तरीत्या लक्ष्ये स्फुटत्वमेव । अस्या भेदान्तरमप्यन्यत्र उक्तं तच्च लक्षणान्तर्गतमिति मूलमतं तच्च हेतुस्त्यक्तवेत्यादिना (३–४) प्रागुक्तम् ॥ २५ ॥

भ्रान्तापह्नुतिमाह—भ्रान्तेति । किंचित्कर्तृकभ्रान्तिजन्यारोपपूर्व-

---

१ शङ्कायां भ्रान्तिवारणे इति पाठः ।

SGDF
Sri Gurgeshwari Digital Foundation

शरीरे तव सोत्कम्पं ज्वरः किं न सखि स्मरः ॥ २६ ॥
छेकापह्नुतिरन्यस्य शङ्कया तथ्यनिह्नवे ।
प्रजल्पन्मत्पदे लग्नः कान्तः किं नहि नूपुरः ॥ २७ ॥
कैतवं व्यज्यमानत्वे व्याजाद्यैर्निह्नुतेः पदैः ।

---

कपरकर्तृकतन्निषेधपूर्वकतथ्यकथनं भ्रान्तापह्नुतिः । अन्यदीयान्यशङ्कयाऽन्यदीयतथ्यनिर्णयः सेत्यक्षरार्थः । वस्तुतस्तु अन्यस्येत्यस्योभयत्रान्वयः सामर्थ्यात् प्रकरणान्निषेध इत्यस्याध्याहारः । अन्यदीयान्यशङ्कयाऽन्यकर्तृकस्तथ्यनिर्णये कार्ये निषेधो भ्रान्तकल्पितनिषेधाद् भ्रान्तापह्नुतिरित्यर्थः । किंचित्कर्तृकभ्रान्तिजन्यारोपविषयसंबन्धिशाब्दतथ्यकथनफलकनिषेधः सेति यावत् । उदाहरणे तथा स्पष्टमेवेति बोध्यम् । उदाहरति—शरीर इति । नायिकायाः शरीरे सोत्कम्पं तापमुपलभ्य तदुक्तं श्रुत्वा वा तस्य ज्वरसाधारण्यात् भ्रान्तासखी शङ्कते तापः स्मरादन्यतोऽपि भवति तत्किं सोत्कम्पं यथा स्यात्तथा तव शरीरे ज्वर इति । सा आह न सखि स्मर इति । तापं तनोति सोत्कम्पमिति पाठे तु नायिकया स्मरतापे उक्ते तस्य ज्वरसाधारण्यात् भ्रान्तसख्या ज्वरः किमिति पृष्टे न सखीति । सखीति सत्य(ख्य)कथेननातथ्यज्वरनिरासेन तथ्यस्मरव्यवस्थापनेन भ्रान्तिवारणमत्रोति भावः । अस्या भेदान्तरमन्यत्र, तच्च तत्त्वाख्यानोपमेति दण्डी ॥ २६ ॥

छेकापह्नुतिमाह—छेकेति । छेका विदग्धाः अन्यस्येति पाठः । अन्यत्रेति पाठेऽप्ययमेवार्थः । अन्येन श्रुतायास्तथैव स्थितायाः स्वरहस्योक्तेः परभीत्या विदग्धत्वात् स्वानभिमततात्पर्यान्तरकथनेन निह्नवश्छेकापह्नुतिः । परभीतिहेतुकानभिमतातथ्यारोपफलकतथ्यनिषेधः सेति यावत् । उदाहरति—प्रजल्पन्निति । प्रजल्पन्मत्पदे लग्न इति नर्मसखीं प्रति नायिकयोक्ते कान्तः किमित्यन्यया पृष्टे भीता सा नहि नूपुर इति नूपुरारोपेण तथ्यकान्तापलापं कृतवतीत्यर्थः । अजल्पन्निति क्वचित्पाठः तत्रापि न दोषः अर्थस्य सुयोजत्वात् ॥ २७ ॥

कैतवापह्नुतिमाह—कैतवमिति । व्याजाद्यैः पदैर्यत्र निह्नुतेर्व्यङ्ग्यत्वं तत्र

---

१ तापं तनोतीति पाठः । २ कैतवापह्नुतिर्व्यक्ते व्याजाद्यैर्निह्नवे पदैः इतिपाठः ।

SGDF
Sri Gargeshwari Digital Foundation

निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥२८॥
उत्प्रेक्षोन्नीयते यत्र हेत्वादिर्निह्नुतिं विना।
त्वन्मुखश्रीकृते नूनं पद्मैर्वैरायते शशी ॥ २९ ॥
इवादिकपदाभावे गूढोत्प्रेक्षां प्रचक्षते।
यत्कीर्तिर्विभ्रमश्रान्ता विवेश स्वर्गनिम्नगाम् ॥ ३० ॥
स्यात्स्मृतिभ्रान्तिसंदेहैस्तदेवा लंकृतित्रयम्।

---

सा कैतवापह्नुतिः। आदिना छलादिपरिग्रहः। उदाहरति—निर्यान्तीति। अत्र कैतवादित्यनेन दृक्पातनिह्नवो व्यङ्ग्यः। अनयोर्भेदान्तरमप्यन्यत्र ॥२८॥

उत्प्रेक्षां लक्षयति—उत्प्रेक्षेति। यत्र निह्नुतिमन्यधर्मनिषेधं विना हेत्वादिरुन्नीयते अन्यधर्मसंबन्धेनान्यतादात्म्येन संभाव्यते उत्कटकोटिकाशङ्काविषयीक्रियते सोत्प्रेक्षेत्यर्थः। आदिना फलस्वरूपे। तथा च यत्र तथ्यनिषेधं विनाऽतथ्यारोपस्तत्तादात्म्यसंभावनं सोत्प्रेक्षा। अपह्नुतिस्तु तथ्यनिषेधे स इति भेदः। तथाच वस्त्वादिभेदेन त्रिधेयमिति बोध्यम्। त्रिविधमपि उदाहरति—त्वन्मुखेति। त्वन्मुखकान्तिलाभायेत्यर्थः। अत्र स्वाभाविके चन्द्रपद्मवैरे त्वन्मुखेत्यादिना कान्तामुखकान्तिलिप्साया अहेतोर्हेतुत्वमार्थिकमुत्प्रेक्ष्यते मम शोभा केवला न पर्याप्तेति पद्मशोभाग्रहणाय तैर्वैरं करोतीति भावः। कान्तामुखकान्तिप्राप्तेरफलस्यापि फलत्वेनोत्प्रेक्षणात्फलोत्प्रेक्षा च। स्वरूपोत्प्रेक्षा तु स्पष्टैव शशिनि पद्मसंकोचकत्वनिमित्तेन वैरकर्तृतादात्म्योत्प्रेक्षणात्। अस्या भेदान्तरमन्यत्र। स्पष्टव्यञ्जकनूनंपदसत्त्वादियमगूढा ॥ २९ ॥

तदभावे तु गूढेत्याह—इवादीति। 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः' इत्यादिप्रतिपादितमादिपदग्राह्यम्। तामुदाहरति—यदिति। यस्य राज्ञः कीर्तिर्विभ्रमश्रान्तेव तां विवेश। भ्रमणश्रान्तेति क्वचित्पाठः। अत्र उक्तरूपव्यञ्जकाभावेऽपि अशेषभुवनपर्यटनरूपविलासश्रान्तकीर्तेर्गङ्गावगाहनमुत्प्रेक्षितम्। तत्राप्यसती श्रान्तिर्हेतुत्वेनोत्प्रेक्षितेति हेतूत्प्रेक्षेयम्। प्रवेशनकर्तृतादात्म्योत्प्रेक्षा फलोत्प्रेक्षा च प्राग्वद्बोध्या ॥ ३० ॥

स्मृतिभ्रान्तिसंदेहाख्यालङ्कारत्रयं लक्षयति—स्यादिति। स्मृतिभ्रान्ति-

---

१ त्वत्कीर्तिर्भ्रमणश्रान्तेति पाठः।

SGDF
Sri Gurgeshwari Digital Foundation

पङ्कजं पश्यतस्तस्या मुखं मे गाहते मनः ॥ ३१ ॥
अयं प्रमत्तमधुपस्त्वन्मुखं वेद पङ्कजम् ।
पङ्कजं वा सुधांशुर्वेत्यस्माकं तु न निर्णयः ॥ ३२ ॥
मीलितं बहुसादृश्याद्भेदवच्चेन्न न लक्ष्यते ।
रसो नालक्षि लाक्षायाश्चरणे सहजारुणे ॥ ३३ ॥
सामान्यं यदि सादृश्याद्भेद एव न लक्ष्यते ।
पद्माकरप्रविष्टानां मुखं नालक्षि सुभ्रुवाम् ॥ ३४ ॥

---

संदेहैस्तदेव स्मृतिभ्रान्तिसंदेहात्मकमेवालङ्कारत्रयं भवतीत्यर्थः । संदोह इति त्वपपाठः । उपमानोपमेयभावकल्पकं सदृशदर्शनेन सदृशान्तरस्मरणकथनं स्मरणालङ्कारः । आरोपविषयज्ञानतिरोधानविशिष्टारोप्यारोपो भ्रान्त्यलङ्कारः । तेन रूपके नातिव्याप्तिः तत्रारोपविषयज्ञानतिरोधानाभावात् । सादृश्यज्ञानफलकैकधर्मिकैकाश्रिताऽनेकविरुद्धधर्मवत्ताज्ञानकथनं संशयालङ्कारः । एकाश्रितेत्युक्त्या नोल्लेखेऽतिव्याप्तिः । एतान् त्रीन् क्रमेणोदाहरति अर्धशः—पङ्कजमित्यादि । गाहते स्मरति । सदृशदर्शने सदृशान्तरस्मरणादित्यर्थः । तस्याः नायिकायाः । क्वचित्कान्तेति पाठः ॥ ३१ ॥

अयमिति भ्रान्त्युदाहरणम् । वेद वेत्ति । अत्र मधुपस्य भ्रमः तत्र बीजं प्रमत्तेति । पङ्कजं वेति संदेहोदाहरणम् । अत्र स्वस्य संदेहो वर्णितः एतेषां भेदा अन्यत्र द्रष्टव्याः ॥ ३२ ॥

मीलितं लक्षयति—मीलितमिति । भेदवद् उपमानम् । यत्र सदृशवस्तुन आधिक्येनाभिभूतमुपमानं स्वरूपत एव नोपलक्ष्यते तन्मीलितम् । समानधर्मोपादानेनोपमानस्वरूपाज्ञानविशिष्टोपमेयवर्णनमिति यावत् । भेदवच्चेन्न लक्ष्यते इति पाठः । उदाहरति—रस इति । नालक्षि स्वरूपतः । चरणे इति सप्तम्यन्तम् । यद्वा यत इति शेषः । यतः सहजारुणे चरणे रसोऽतस्तयोरित्याद्यर्थः ॥ ३३ ॥

सामान्यं लक्षयति—सामान्यमिति । यत्र सदृशतया स्वरूपोपलम्भेऽपि न वैधर्म्योपलम्भस्तत्सामान्यम् । भेद एवेत्यस्य विशेष एवेत्यर्थः । एवेन स्वरूपव्यावृत्तिः । सादृश्येनोपमानभेदाज्ञानेनोपमेयवर्णनमिति यावत् । उदाहरति—पद्मेति । कमलसमूहस्थितानां नायिकानामित्याद्यर्थः । नालक्षि



SGDF
Sri Gargeshwari Digital Foundation

हेतोः कुतोऽपि वैशिष्ट्यात्स्फूर्तिरुन्मीलितं मतम् ।
लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ ३५ ॥
अनुमानं च कार्यादेः कारणाद्यवधारणम् ।
अस्ति किंचिद्यदनया मां विलोक्य स्मितं मनाक् ॥ ३६ ॥
अर्थापत्तिः स्वयं सिध्येत्पदार्थान्तरवर्णनम् ।
स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ ३७ ॥
स्यात्काव्यलिङ्गं वागर्थो नूतनार्थसमर्पकः ।
जितोऽसि मन्दकन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥ ३८ ॥

---

विशेषतः । एवं चोपमानस्वरूपतिरोधानमाद्यं व्यावर्तकधर्माज्ञानकृतभेदतिरोधानं सामान्यमिति फलितम् ॥ ३४ ॥

उन्मीलितं लक्षयति—हेतोरिति । केनचिद्धेतुना विशेषे ज्ञाते या भेदेन स्फुर्तिः सोन्मीलितम् । कुतोऽपि हेतोर्वैशिष्ट्यात्स्फूर्तिरित्यन्वयः । कस्मादपि हेतोरुपमेयस्य वैशिष्ट्यादुपमानाधिक्यात्स्फूर्तिर्ज्ञानमित्यादि तदर्थः । उपमानादुपमेयोत्कर्षज्ञानाधायकहेतुकथनमिति यावत् । उदाहरति—लक्षितानीति । चन्द्रोदये पद्मसंकोचे मुखभेदधीरित्यर्थः ॥ ३५ ॥

अनुमानं लक्षयति—अनुमानमिति । कार्येण कारणज्ञानं यत्र तत्रानुमानालङ्कारः । आदिना संबन्धिपरिग्रहः । उदाहरति—अस्तीति । यदनया नायिकया मां विलोक्य मनाक् ईषत् स्मितं हसितं तत् अस्या अन्तः किंचिदस्तीत्यक्षरार्थः । अत्र स्मितेन कार्येण तस्या अन्तःस्थितोऽभिलाषः कारणमनुमीयत इति भावः । चस्त्वर्थे ॥ ३६ ॥

अर्थापत्तिं लक्षयति—अर्थापत्तिरिति । यत्र पदार्थान्तरवर्णनं स्वयम् आर्थिकं सिध्येत्सा अर्थापत्तिः । यत्रैकस्य सिद्धयाऽर्थान्तरमर्थात्सिध्यतीति वर्ण्यते तत्र सेति यावत् । उदाहरति—स इति । उत्कृष्ट इत्यर्थः । तथा चोत्कृष्टचन्द्रे जिते तज्जितपद्मानामपकृष्टानां जयोऽर्थात् सिद्ध इति भावः ॥ ३७ ॥

काव्यलिङ्गमाह—स्यादिति । यत्र नवस्यार्थस्य समर्थको बोधको वागर्थः पदार्थवाक्यार्थान्यतररूपः वाच्य एव वाक्यार्थः पदार्थो वा प्रस्तुतवाक्यार्थे हेतुभूत इति यावत्, तत्र काव्यलिङ्गमलङ्कारः । समर्थक इति पाठेऽपि उक्त एवार्थः । उदाहरति—जित इति । हृदि त्रिलोचनसत्त्वस्य

SGDF
Sri Gargeshwari Digital Foundation

ಪುಸ್ತಕ ಸಂಖ್ಯೆ 15423



अलङ्कारः परिकरः साभिप्राये विशेषणे ।
सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ ३९ ॥
साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।
चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ ४० ॥
अक्रमातिशयोक्तिश्चेद् युगपत्कार्यकारणे ।
आलिङ्गन्ति समं देव ज्यां शराश्च पराश्च ते ॥ ४१ ॥
अत्यन्तातिशयोक्तिस्तत्पौर्वापर्यव्यतिक्रमे ।
अग्रे मानो गतः पश्चादनुनीता प्रियेण सा ॥ ४२ ॥

---

वाच्यस्य वाक्यार्थस्य कन्दर्पदाहकतृतीयलोचनसत्त्वाशयगर्भतया कन्दर्पजयरूपप्रस्तुतवाक्यार्थे हेतुत्वमत्र बोध्यम् । तदज्ञानादेव तस्य मन्दत्वं, तदासक्ते हृदि क तत्प्रसङ्ग इति भावः ॥ ३८ ॥

परिकरं लक्षयति—अलङ्कार इति । स्पष्टोऽर्थः । उदाहरति—सुधांश्विति । अस्य विशेषणस्य शैत्यप्रतीतिद्वारा तापनिवारणरूपवाक्यार्थोपयोगित्वाच्छीतलान्वितेन तापोपशान्तेः संभवात्साभिप्रायत्वम् । चन्द्रांश्वित्यपपाठः ॥ ३९ ॥

परिकराङ्कुरं लक्षयति—साभीति । स्पष्टम् । उदाहरति—चतुरिति । अत्र चतुर्भुज इति विशेष्यं दानहेतुकराणां देयसमसंख्यत्वेन युगपत्पुमर्थचतुष्टयदानसामर्थ्याभिप्रायम् ॥ ४० ॥

षड्विधातिशयोक्तिसामान्यलक्षणं सूचयन् तद्विशेषमक्रमातिशयोक्तिमाह—अक्रमेति । यदि युगपत्स्त इत्याद्यर्थः । कार्यकारणयोर्यौगपद्यकथनमक्रमातिशयोक्तिः । तथाचारोपविषयनिगरणेनाभेदप्रतिपत्तिरिति सामान्यलक्षणमतिशयोक्तेर्बोध्यम् । उदाहरति—आलिङ्गन्तीति । हे देव ते शराः पराश्च शत्रवः ज्यां मौर्वीं भुवं च समं युगपदेवालिङ्गन्तीत्यर्थः । अत्र मौर्वीशरसंधानस्य तेषां भूसंबन्धे कार्ये कारणत्वेऽपि तयोर्यौगपद्यं वर्णितम् ॥ ४१ ॥

अत्यन्तातिशयोक्तिं लक्षयति—अत्यन्तेति । कार्यकारणयोः प्रसिद्धपौर्वापर्यव्यतिक्रमकथनमत्यन्तातिशयोक्तिः । तथाच तयोर्व्यतिक्रमे सतीति फलितम् । उदाहरति—अग्रे इति । अत्रानुनयरूपकारणात्पूर्वं मानभङ्गरूपकार्यवर्णनम् ॥ ४२ ॥

SGDF
Sri Gargeshwari Digital Foundation

चपलातिशयोक्तिस्तु कार्ये हेतुप्रसक्तिजे ।
यामीति प्रियपृष्टाया वलयोऽभवदूर्मिका ॥ ४३ ॥
संबन्धातिशयोक्तिः स्यात्तदभावेऽपि तद्वचः
पश्य सौधाग्रसंसक्तं विभाति विधुमण्डलम् ॥ ४४ ॥
भेदकातिशयोक्तिश्चेदेकस्यैवान्यतोच्यते ।
अहो अन्यैव लावण्यलीला बालाकुचस्थले ॥ ४५ ॥
रूपकातिशयोक्तिश्चेद्रूप्यं रूपकमध्यगम् ।
पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ॥ ४६ ॥

---

चपलातिशयोक्तिं लक्षयति—चपलेति । हेतुप्रसक्तिर्भावित्वेन तस्य संभावना तज्जन्ये कार्ये सति सा, तस्यामेव कार्योत्पत्तिकथनं चपलातिशयोक्तिरित्यर्थः । उदाहरति—यामीति । गच्छामीत्यर्थः । वलयः करकङ्कणमूर्मिका बाहुभूषणमभवदित्यर्थः । यद्वा ऊर्मिका अङ्गुलीयकं वलयोऽभवदित्यर्थः । 'वलयोऽस्त्रियाम्' इत्युक्तेः पुंस्त्वम् । अत्र वियोगरूपकारणसंभावनयैव कार्श्यरूपकार्योत्पत्तिर्वर्णिता ॥ ४३ ॥

संबन्धातिशयोक्तिं लक्षयति—संबन्धेति । असंबन्धे संबन्धकथनं संबन्धातिशयोक्तिः । उदाहरति—पश्येति । नायिकां प्रति नायकोक्तिः । अत्र चन्द्रबिम्बस्य सुधानिर्मितगृहशिखरसंबन्धाभावेऽपि तद्वर्णनम् । इदं भेदद्वयं क्वचित्पुस्तके न दृश्यते तत्र चातुर्विध्यं बोध्यम् ॥ ४४ ॥

भेदकातिशयोक्तिं लक्षयति—भेदकेति । भेदकथने लोकप्रसिद्धपदार्थापेक्षया चमत्काराधायकत्वं भेदकातिशयोक्तित्वम् । एकस्यैव स्वनिरूपितभेदकथनं सेति यावत् । उदाहरति—अहो इति । अत्र लोकप्रसिद्धलावण्याभेदेऽपि लावण्यलीलायाः स्वत एव भेदवर्णनम् । अत एव द्योतकाहोशब्दप्रयोगोऽपि सफलः । तत्र चौदिति प्रगृह्यत्वात्प्रकृतिभावः ॥ ४५ ॥

रूपकातिशयोक्तिं लक्षयति—रूपकेति । आरोप्यारोपविषययोरारोप्यरूपात्मनैव कार्यकारणभावकथनं रूपकातिशयोक्तिः । आरोपणीयोक्त्यैवारोपविषयोक्तिः सेति यावत् । उदाहरति—पश्येति । शितास्तीक्ष्णाः क्वचित्सिता इति पाठः । अत्रारोपविषयनेत्रकटाक्षयोरारोप्यनीलकमलशरस्वरूपेण कार्यकारणभावकथनात् आरोपणीयवाचिनीलोत्पलशरपदाभ्यामेवारोपविषयनेत्रकटाक्षयोः प्रतीतिः पृथगनभिधानम् । रूपकभेदाः

SGDF
Sri Gangeshwari Digital Foundation

प्रौढोक्तिस्तदशक्तस्य तच्छक्तत्वावकल्पनम् ।
कलिन्दजातीररुहाः श्यामलाः सरलद्रुमाः ॥ ४७ ॥
संभावनं यदीत्थं स्यादित्यूहोऽन्यप्रसिद्धये ।
सिक्तं स्फटिककुम्भान्तःस्थितिश्वेतीकृतैर्जलैः ॥ ४८ ॥
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ।
वाञ्छितादधिकप्राप्तिरयत्नेन प्रहर्षणम् ॥ ४९ ॥
दीपमुद्योतयेद्यावत्तावदभ्युदितो रविः ।
इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् ॥ ५० ॥

---

सर्वेऽप्यत्र बोध्याः । एतदर्थमेव रूपकपदम् । इयमेव निगीर्याध्यवसानातिशयोक्तिः काव्यप्रकाशे उक्ता । अलङ्कारसर्वस्वे तु अस्याः सापह्नवत्वमप्युक्तम् । तेन तत्कृतभेदोऽप्यन्यत्र द्रष्टव्यः ॥ ४६ ॥

प्रौढोक्तिं लक्षयति—प्रौढोक्तिरिति । तत्रासमर्थस्य तत्र सामर्थ्यवर्णनं प्रौढोक्तिः । उदाहरति—कलिन्देति । अत्र यमुनातटरोहस्य नैल्यजननासमर्थत्वेऽपि तत्समर्थत्वकथनम् । अयं चातिशयोक्तिभेदो नालङ्कारान्तरमिति काव्यप्रकाशः । अत्र कचित्पुस्तके कलिन्देत्युदाहरणापाठस्तु लेखकप्रमादात् । एतेन सिक्तमित्येकमेवोभयोरुदाहरणमिति उभयमेक एवालङ्कार इति चापास्तम्, तयोर्भेदाद् अत एव तदावश्यत्वाच्च ॥ ४७ ॥

संभावनं लक्षयति—संभावनमिति । अन्यप्रसिद्धये इति तादर्थ्ये चतुर्थी । तत्फलको यस्तादृश ऊह इत्याद्यक्षरार्थः । तथा च यदीत्थं स्यात्तदाऽन्यकार्यं स्यादिति तर्कविषयार्थबोधकपदसमभिव्याहारः संभावना । उदाहरति—सिक्तमिति । स्फटिककलशान्तःस्थित्या श्वेतीकृतैर्जलैः सिक्तं मौक्तिकं यदि लतां जनयति तदा ते यशस्तत्पुष्पैः सदृशमित्यन्वयः । स्फटिकघटान्तःस्थितजलसिक्तमौक्तिकाङ्कुरविरूढलता यदि स्यात्तदा तत्पुष्पसमं ते यश इति तत्साम्येन ते यशोवर्णनं स्यादित्यर्थः ॥ ४८ ॥

प्रहर्षमाह—वाञ्छितेति । अनायासेन इच्छाविषयाधिकप्राप्तिबोधकपदसमुदायो यत्र तत्र प्रहर्षालङ्कार इत्यर्थः । वाञ्छितार्थाधिकप्राप्तिर्यत्नेनेति (?) पाठान्तरम् । अर्थः स एव ॥ ४९ ॥

उदाहरति—दीपमिति । तदधिकप्रकाशस्यानायासेन प्राप्तिरिति भावः ।

SGDF
Sri Gargeshwari Digital Foundation

दीपमुद्द्योतयेद्यावत्तावन्निर्वाण एव सः ।
क्रियादिभिरनेकस्य तुल्यता तुल्ययोगिता ॥ ५१ ॥
संकुचन्ति सरोजानि स्वैरिणीवदनानि च ।
प्राचीनाचलचूडाग्रचुम्बिबिम्बे सुधाकरे ॥ ५२ ॥
प्रस्तुताप्रस्तुतानां च तुल्यत्वे दीपकं मतम् ।
मेधां बुधः सुधामिन्दुर्बिभर्ति वसुधां भवान् ॥ ५३ ॥
आवृत्ते दीपकपदे भवेदावृत्तिदीपकम् ।

---

विषादं लक्षयति—इष्यमाणेति । इष्यमाणाद्विरुद्धोऽर्थो यत्र प्राप्यते तद्विषादनम् ॥ ५० ॥

उदाहरति—दीपमिति । उद्द्योतयेदुद्दीपयेत् । निर्वाणो गतः शान्त इति यावत् । तुल्ययोगितां लक्षयति—क्रियादिभिरिति । आदिना गुणः, बहुवचनं व्यत्तयभिप्रायं, तथाच क्रियया गुणेन वा प्रस्तुतानामप्रस्तुतानां वा यत्तुल्यत्वं सा तुल्ययोगितेत्यर्थः । अनेकेषां तेषां वा क्रियागुणान्यतरैकतुल्यधर्मयोगित्वं सेति यावत् । एतेन प्रस्तुतानामेव ततस्तत्त्वे इयमिति प्राचोक्तमपास्तं विनिगमकाभावात् ॥ ५१ ॥

तत्राद्यामुदाहरति पद्येन—संकुचन्तीति । उदयाचलमस्तकस्पृक्चन्द्रबिम्बे सतीत्याद्यर्थः । अत्र चन्द्रोदये मुखानां पद्मानां च तदाश्रयतया वर्णनीयत्वेन प्रस्तुतत्वाल्लक्ष्यत्वम् । एतेन प्रस्तुतानामप्रस्तुतानां चेत्यर्थं कृत्वाऽत्र मुखानां प्रस्तुतत्वं कमलानामप्रस्तुतत्वमित्यपास्तम् । दीपकेन सांकर्यापत्तेश्च । अस्या भेदान्तरमपि अन्यत्र ॥ ५२ ॥

दीपकं लक्षयति—प्रस्तुतेति । क्रियादिभिरित्यस्यानुषङ्गः । चस्त्वर्थे । प्रस्तुताप्रस्तुतानां तु क्रियादिभिस्तुल्यत्वे दीपकमित्यन्वयः । प्रस्तुताप्रस्तुतनिष्ठतादृशसाधारणधर्मकथनं इदमित्यर्थः । तादृशानामुपमानोपमेयानामन्येषां वा क्रियादिरूपैकधर्मकथनं यत्र तत्रेदमिति यावत् । दीपकमितीवार्थे कन् । एकस्यानेकोपकारकत्वं साधारणधर्मः । प्रस्तुताप्रस्तुतेत्यनेन तुल्ययोगिताव्यावृत्तिः । उदाहरति—मेधामिति । अत्र राजा प्रस्तुतो वर्ण्यत्वाद् । अत्र धारणरूपक्रियाया दीपवन्मध्ये सकृदुक्तिः ॥ ५३ ॥

आवृत्तिदीपकं लक्षयति—आवृत्ते इति । अत्र पदशब्दः कर्मव्युत्पत्त्याऽर्थपरोऽपि । तथाच दीपसदृशपदे क्रियादिवाचके क्रियादिरूपेऽर्थे वा

SGDF
Sri Gargeshwari Digital Foundation

दीप्त्याग्निर्भाति भातीन्दुः कान्त्या भाति रविस्त्विषा ॥५४॥

वाक्ययोरर्थसामान्ये प्रतिवस्तूपमा मता ।
तापेन भ्राजते सूर्यः शूरश्चापेन राजते ॥ ५५ ॥

चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलंकृतिः ।
स्यान्मल्लप्रतिमल्लत्वे संग्रामोद्दामहुंकृतिः ॥ ५६ ॥

---

आवृत्ते तदित्यर्थः । प्रस्तुताप्रस्तुतोपमानोपमेयनिष्ठक्रियादिरूपैकधर्मवाचकपदस्य तादृशस्य वा कारकवाचकपदस्य वा कारकरूपार्थस्य वा यत्रावृत्तिस्तत्रावृत्तिदीपकमिति यावत् । तत्र त्रिविधमुदाहरति—दीप्त्येति । अत्र भातीत्यस्य तदर्थस्य चावृत्तिः स्पष्टैव । कारकपदावृत्तेरुदाहरणं तु नानार्थस्थले बोध्यम् । एतेनात्र दीप्तिरूपकारकपदावृत्तिरित्यपास्तं तदभावात् । अत्र दिवा रवे रात्राविन्दोः संधावग्नेः प्रकृतत्वं बोध्यम् । तेन दीपकसामान्यलक्षणसंगतिः । त्विषा भवानिति पाठे तु राजैव प्रकृत इति सम्यगेव । एतेनात्र रविरेव प्रकृत इति प्राचोक्तमपास्तम् । काव्यप्रकाशे तु मालादीपकमधिकमुक्तम् ॥ ५४ ॥

प्रतिवस्तूपमा लक्षयति—वाक्ययोरिति । अर्थसामान्ये इत्यस्यार्थयोस्तुल्यत्वे इत्यर्थः । यत्र वाक्यद्वयगताना पदार्थानां सर्वेषा मिथः साम्यं तत्र प्रतिवस्तूपमा । उपमा सादृश्यं प्रतिवस्तु प्रतिवाक्यद्वयगतपदार्थे यस्यामिति व्युत्पत्तेः उपमानोपमेयबोधकवाक्यद्वये एकक्रियारूपसाधारणधर्मस्य पृथङ्निर्देशे इयमिति यावत् । तेन नावृत्तिदीपकान्तर्गतिः । परं तु पदभेदेन तदुक्तिर्बोध्या पदावृत्तौ कथितपदत्वापत्तेः । अत एव प्रकाशैकवाक्यता । उदाहरति—तापेनेति । अत्रौष्ण्येन भानू राजत इत्यस्य धनुषा शूरो राजत इति द्वितीयेन साम्याद्राजत इत्यर्थस्य पृथक्पदाभ्या निर्देशात्तापचापयोस्सूर्यशूरयोः शोभयोश्च मिथः साम्यम् ॥ ५५ ॥

दृष्टान्तं लक्षयति—चेदिति । वाक्यार्थयोर्यत्र बिम्बप्रतिबिम्बभावः उपमानोपमेयसाधारणधर्माणां सर्वेषां यत्र बिम्बप्रतिबिम्बभावप्रधानगम्यत्वं (?), साधारणधर्मसहितस्योपमानस्य च बिम्बप्रतिबिम्बभावबोधकसमभिव्याहारो वा इति यावत्, तत्र दृष्टान्तालङ्कारः । साधारणधर्मसहितस्येति विशेषणात्तुल्ययोगितादीपकप्रतिवस्तूपमानां व्यावृत्तिः । तत् तदा । मल्लप्रतिमल्लत्वे संग्रामसबन्धिनी तदाधारा चोद्दामा निष्प्रतिबन्धा

SGDF
Sri Gargeshwari Digital Foundation

दृष्टान्तश्चेद्भवन्मूर्तिस्तन्मृष्टा दैवदुर्लिपिः ।
जाता चेत्प्राक् प्रभा भानोस्तर्हि याता विभावरी ॥५७॥
वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शना ।
या दातुः सौम्यता सेयं सुधांशोरकलङ्कता ॥ ५८ ॥
व्यतिरेको विशेषश्चेदुपमानोपमेययोः ।
शैला इवोन्नताः सन्तः किं तु प्रकृतिकोमलाः ॥ ५९ ॥

---

उत्कृष्टा हुंकृतिः स्यादित्युत्तरार्धार्थः । मल्लप्रतिमल्लत्वे यथा संग्रामोद्दामहुंकृतिः स्यात्तथा यदि बिम्बवत्त्वे तदा दृष्टान्तः स्यादित्यन्वयात्पूर्वोत्तरवाक्यार्थयोर्बिम्बप्रतिबिम्बभावाल्लक्ष्यमपीदमेव पद्यम् । अत्र मल्लप्रतिमल्लत्वबिम्बयोर्दृष्टान्तहुंकृत्योश्च मिथो बिम्बप्रतिबिम्बभावः । यद्वा दृष्टान्तसहितस्य बिम्बप्रतिबिम्बत्वस्य हुंकृतिसहितस्य मल्लप्रतिमल्लत्वस्य च सः । एवं च दृष्टान्तदार्ष्टान्तिकभावस्यावभासाल्लक्षणसंगतिः ॥ ५६ ॥

दृष्टान्तहुंकृत्योर्लिङ्गभेदेन बिम्बप्रतिबिम्बभावस्य स्पष्टमनवभासादुदाहरणान्तरमाह—दृष्टान्त इति । भगवन्तं प्रति भक्तोक्तिः । हे विष्णो भवन्मूर्तिरन्तर्हृदये यदि दृष्टा तत्तदैव दैवलिपिर्मृष्टा नष्टा । प्राक् प्राच्यां यदि भानोः प्रभा जाता तदा रात्रिर्गतेत्यर्थः । अत्र तेषां स्पष्टो बिम्बप्रतिबिम्बभावः ॥ ५७ ॥

निदर्शनां लक्षयति—वाक्यार्थयोरिति । यत्र सादृश्यवशाद्वाक्यार्थयोरैक्यमारोप्यते उपमानोपमेयभावकल्पनाफलको वाक्यार्थयोराहार्यभेदनिश्चयरूपतादात्म्यारोप इति यावत्तत्र निदर्शनालङ्कारः । अत एव दृष्टान्तवैलक्षण्यम् । तत्रैक्यारोपाभावात् । इयं च संभवद्वस्तुसंबन्धनिबन्धना तद्विपरीता चेति द्विधा । तां तथाविधामुदाहरति—या दातुरिति । विरहिण्याश्चन्द्रकिरणोपतप्तायाः इयमुक्तिः । दातृसौम्यत्वचन्द्राकलङ्कत्वरूपवाक्यार्थयोरसंभावितत्वेन समयोर्यत्तद्भ्यामैक्यारोपोऽत्र स्फुटः । दातुः सौम्यत्वसंबन्ध(? न्धा)संभवाच्चन्द्रस्याकलङ्कत्वसंबन्धासंभवाच्चोभयविधत्वं तत्सौम्यत्वमिव तस्याकलङ्कतेत्युपमानोपमेयभावः ॥ ५८ ॥

व्यतिरेकं लक्षयति—व्यतिरेक इति । यत्रोपमानापेक्षयोपमेयस्याधिक्यवर्णनं तत्र व्यतिरेकालङ्कारः । उदाहरति—शैला इति । अत्र ह्युन्नतत्वेन

SGDF
Sri Gargeshwari Digital Foundation

सहोक्तिःसहभावश्चेद्भासते जनरञ्जनः ।
दिगन्तमगमद्यस्य कीर्तिः प्रत्यर्थिभिः सह ॥ ६० ॥
विनोक्तिश्चेद्विना किंचित्प्रस्तुतं हीनमुच्यते ।
विद्या हृद्यापि साऽवद्या विना विनयसंपदम् ॥ ६१ ॥
समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।
अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः ॥ ६२ ॥

---

साम्येऽपि कोमलत्वेनोपमेयबुधानामाधिक्यप्रतिपादनम् । अस्य भेदान्तरमप्यन्यत्रोक्तम् ॥ ५९ ॥

सहोक्तिं लक्षयति—सहोक्तिरिति । यत्र जनमनोहारी सहभावः उपमानोपमेयभावकल्पकः सहृदयचमत्काराधायकः स इति यावत् तत्र सहोक्त्यलङ्कारः । पुत्रेण सहेत्यत्र वारणाय जनरञ्जन इति । तत्र तेषां तदभावात् । उदाहरति—दिगन्तमिति । यस्य वर्णनीयस्य राज्ञः । अत्र साहित्यबलेनैव कीर्तिदिगन्तगमनस्य वैरिनिष्ठस्य तस्य चोपमानोपमेयभावकल्पनम् । अस्य वैरिणो दिगन्तं गता इति वर्ण्यनिष्ठातिपौरुषवर्णनेन चमत्कारश्च ॥ ६० ॥

विनोक्तिं लक्षयति—विनोक्तिरिति । यदि किंचिद्विना यत्र प्रस्तुतं हीनमुच्यते चमत्काराधायकवर्णनीयनिष्ठन्यूनताभिव्यञ्जको विनाभावः तादृशयदभावोक्त्या वर्णनीये सदसत्त्वान्यतरापादनं तादृशोक्तिरिति यावत्, तत्र विनोक्त्यलङ्कारः । उदाहरति—विद्येति । अत्र वर्णनीयविद्याया विनयाभावेन असत्त्वप्रतिपादनम् । विना खलैर्विभात्येषा राजेन्द्र भवतः सभेति सत्त्वोदाहरणं बोध्यम् ॥ ६१ ॥

समासोक्तिं लक्षयति—समासोक्तिरिति । यत्र प्रस्तुते श्लिष्टैरश्लिष्टैर्वा पदैस्तदर्थैर्वा वर्ण्यमाने सति चमत्काराधायकाप्रस्तुतार्थप्रत्ययस्तत्र समासोक्त्यलङ्कारः । समासेन संक्षेपेणोक्तिरिति योगार्थः । उदाहरति—अयमिति । अत्र प्रस्तुतमहिम्नैव परकर्तृककामिनीमुखचुम्बनोपस्थितिः । तत्रापि ऐन्द्रीशब्देन स्त्रीत्वस्य परकीयात्वस्य च चन्द्रमःशब्देन पुंस्त्वस्य मुखशब्दात्प्रारम्भवदनयो रक्तशब्दादरुणकामुकयोश्चुम्बतिशब्दाचुम्बनसंबन्धयोः प्रतीत्या परनायिकासक्तपुरुषवृत्तान्तः प्रतीयते इति श्लिष्टोदाहरणमिदमन्यत्त्वन्यत्र ॥ ६२ ॥

SGDF
Sri Gargeshwari Digital Foundation

खण्डश्लेषः पदानां चेदेकैकं पृथगर्थता।
उच्छलद्भूरिकीलालः शुशुभे वाहिनीपतिः ॥ ६३ ॥
भङ्गश्लेषः पदस्तोमस्यैव चेत्पृथगर्थता।

---

श्लेषो द्विधा शब्दश्लेषोऽर्थश्लेषश्च । तत्र विजातीयोच्चारणयोग्यत्वेन भिन्नयोः शब्दयोरेकोच्चारणविषयत्वं शब्दश्लेषः । सोऽष्टधा वर्णपदलिङ्गभाषाविभक्तिप्रकृतिप्रत्ययवचनभेदात् । तत्र वर्णभेदेन विरूपयोः पदयोरादेशादिवशेनैकरूप्ये वर्णश्लेषः। यथा चन्द्राद्दष्टवाचकविधुविधिपदयोः सप्तम्यन्ते विधावित्यत्र। न्यूनाधिकतादिना भिन्नार्थयोः पदयोर्मिलनादेकार्थप्रतिपादकत्वं पदश्लेषः। यथा पृथु कार्तस्वरपात्रम्। अत्र महत्सुवर्णपात्रं विस्तृतार्तस्वरस्थानं च पृथुकार्थं य आर्तस्वरस्तस्य स्थानं वा तत्संबन्ध्यार्तस्वरस्थानं वेति भिन्नावर्थौ । विभिन्नलिङ्गार्थप्रतिपादकयोर्व्याकरणवशेनैकरूप्यं लिङ्गश्लेषः। अस्योदाहरणं यथा। कस्मै प्रसीदति शिवः किमान्ध्राणां वद प्रियम्। आन्ध्रगीर्वाणतो ह्येकं चिन्तकायोत्तरं शृणु। विभक्त्योर्भिन्नत्वे सति नाम्नो धातोश्चैकरूप्यं विभक्तिश्लेषः। यथा हरेति। इदं तिङन्तं संबुध्यन्तं च। भिन्नधात्वोः प्रत्ययविशेषकृतप्रक्रियावशेनैकरूप्यं प्रकृतिश्लेषः। यथा वह प्रापणे वच परिभाषणे इति धात्वोर्वक्ष्यतीति। वस्तुतो भिन्नयोरपि तृच्भावप्रत्यययोरैकरूप्यं प्रक्रियावशेन प्रत्ययश्लेषः। यथा नान्दिता नन्दिता अत्रोभयत्र व्यर्थत्वप्रतीतिः। द्व्येकार्थप्रतिपादकयोर्व्याकरणवशेनैकरूप्यं वचनश्लेषः। यथा कुरुताम्। अत्र परस्मैपदात्मनेपदभेदेनोभयगतिः। अयमष्टविधोऽपि सभङ्गश्लेषः। तत्र ग्रन्थकारः पदश्लेषस्यैव भेदद्वयं सूचयन्भङ्ग( ? खण्ड)श्लेषं लक्षयति–खण्डेति। पदानामित्यस्य मध्यमणिन्यायेनान्वयः। पदानां समस्तपदसंबन्धि एकैकं प्रति अवान्तरैकरूपखण्डपदस्य पृथगर्थता यदि तदा पदसंबन्धिखण्डे श्लेषः । समस्तपदावयवस्यैकरूपस्यैवार्थभेदेन वाक्यार्थद्वयप्रतिपादकत्वं स इति यावत् । उदाहरति–उच्छलदिति । उच्छलन्ति प्रवहन्ति भूरीणि कीलालानि यस्मिन्निति बहुव्रीहिः। अत्र कीलालपदेन जलरुधिरयोर्वाहिनीपदेन नदीसेनयोः पृथगेव पदादुपस्थितिरिति सेनापतिनदीपतिघटितवाक्यार्थद्वयपरत्वम् ॥ ६३ ॥

पूर्वोक्तमेव द्वितीयमाह–भङ्गेति। पदसमुदायस्यैव यदि अवान्तरविलक्षणपदभङ्गेन भिन्नार्थकत्वेन वाक्यार्थद्वयप्रतिपादकत्वं तदा भङ्ग-

SGDF
Sri Gargeshwari Digital Foundation

अजरामरता कस्य नायोध्येव पुरी प्रिया ॥ ६४ ॥
अर्थश्लेषोऽर्थमात्रस्य यद्यनेकार्थसंश्रयः ।
कुटिलाः श्यामला दीर्घाः कटाक्षाः कुन्तलाश्च ते ॥ ६५ ॥
अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा ।
कार्यकारणसामान्यविशेषादेरसौ मता ॥ ६६ ॥

---

श्लेष इत्यर्थः । एतेन तद्घटकपदव्यावृत्तिः । उदाहरति—अजरेति । अयोध्यापुरीवाजरामरता कस्य नो प्रिया अपि तु सर्वस्यापीत्यर्थः । अत्राजरश्चामरश्चेति द्वन्द्वोत्तरभावप्रत्ययेनाजरता अमरतेत्यर्थस्याजश्च रामश्च तयो रतेति द्वन्द्वगर्भषष्ठीतत्पुरुषेणाजरामविषयकप्रीतिमतीत्यर्थस्य च प्रतिपादनाल्लक्षणसमन्वयः । उभयत्र पूर्ववन्न तद्घटकपदस्यैकस्य नानार्थत्वमपि तु समुच्चारणेनैव घटकपदभेदकल्पनया तथेति भावः । अयं शब्दालङ्कारः इति प्रकाशः । अर्थालङ्कार इत्यन्ये प्राञ्चः । न चास्य गुणेषु पाठान्नालङ्कारत्वं, तस्यान्यरूपस्य प्राक् प्रतिपादितत्वादिति बोध्यम् ॥ ६४ ॥

अथार्थश्लेषं लक्षयति—अर्थेति । अर्थमात्रस्य न तु शब्दविशिष्टस्य । तेन पर्यायशब्दोपस्थाप्यत्वमुक्तम् । अनेकार्थसंश्रयः अनेकपदार्थानामन्वयः । तथा च पर्यायशब्दोपस्थाप्यानेकपदार्थान्वितार्थद्वयोपस्थापकपदवत्त्वमर्थश्लेषः । शब्दश्लेषे तु पर्यायशब्दानुपस्थाप्यत्वं विशेषः । तथा च विशेष्ययोर्भिन्नत्वेऽपि विशेषणानामैक्यं यत्र तत्रैकार्थकैर्विशेषणपदैर्यत्राप्रस्तुतसाधारणधर्माः कुटिलत्वादय एकार्थकाः कुटिलादिपदबोध्यास्ते वक्रादिपदैरपि सुवचा इति भावः ॥ ६५ ॥

अप्रस्तुतप्रशंसां लक्षयति—अप्रस्तुतेति । लक्ष्यनिर्देशोऽयम् । तच्छब्द एतत्परामर्शकः । तथा च सा अप्रस्तुतप्रशंसा यत्र प्रस्तुतमनुगच्छति प्रस्तुते पर्यवस्यति तत्र अप्रस्तुतप्रशंसेत्यर्थः । यत्राप्राकरणिकार्थाभिधानेन स्तुत्यनिन्द्यान्यतररूपेण प्राकरणिकार्थप्रशंसाप्रतीतिस्तत्राप्रस्तुतप्रशंसालङ्कार इति यावत् । तद्भेदानाह—कार्येति । आदिना तुल्यार्थग्रहणम् । अप्राकरणिकश्चार्थः कार्यरूपो हेतुरूपः सामान्यरूपो विशेषरूपोऽसदृशवस्तुरूपश्चेति पञ्चविध इति तद्भेदादियं पञ्चविधेत्यर्थः । तदुक्तम्—'कार्ये निमित्ते सामान्ये विशेषेऽप्रस्तुते सति । तदन्यस्य वचस्तुल्ये तुल्य-

SGDF
Sri Gargeshwari Digital Foundation

कमलैः कमलावासैः किं किं नासादि सुन्दरम् ।
अप्यम्बुधेः परं पारं प्रयान्ति व्यवसायिनः ॥ ६७ ॥
भवेदर्थान्तरन्यासोऽनुषक्तार्थान्तराभिधा ।
हनूमानब्धिमतरद्दुष्करं किं महात्मनाम् ॥ ६८ ॥

---

स्येति च पञ्चधा' इति । निमित्ते कारणे तदन्यस्य कारणादेस्तुल्येऽप्रस्तुते तुल्यस्य च यद्वचनमिति तदर्थः ॥ ६६ ॥

उदाहरति—कमलैरिति । अत्राप्रस्तुतकमलकथया प्रस्तुतधनिककथाक्षेप इति तुल्योदाहरणमिदमिति केचित् । अन्ये तु अप्रस्तुतसामान्यप्रशंसया प्रस्तुतविशेषप्रशंसोदाहरणमिदम् । इदं च नेत्रकरादिभिर्नायिकाया वर्णयितुर्वाक्यम् । लक्ष्मीस्थानैः कमलैः सर्वं सुन्दरमिति सामान्यप्रशंसया नेत्रादिभिरियं शोभत इति प्रस्तुतनायिकायां शोभाविशेषाक्षेप इत्याहुः । अप्रस्तुतविशेषप्रशंसया प्रस्तुतसामान्यमुदाहरति—अप्यम्बुधेरिति । अत्राप्रस्तुतानां व्यवसायिनामम्बुधिपारगमनोद्यमविशेषः स्तुत्यः किंचित्कर्म कर्तव्यमिति व्यवसायिनः किं न कुर्वन्तीति वा तेषां न किमपि दुष्करमिति वा सामान्यस्तुतिराक्षिप्यते । अत्र च अप्रस्तुतकथनेन तत्प्रतीतिः श्लेषेण समासोक्त्या सादृश्यमात्रेण वेति प्रकारत्रयम् । तच्चान्यत्र स्पष्टम् । प्रकृते त्वाद्ये श्लेषेण द्वितीये सादृश्यमात्रेणेति बोध्यम् । अन्यथापीयमन्यत्रोक्ता ॥ ६७ ॥

अर्थान्तरन्यासं लक्षयति—भवेदिति । यत्र मुख्येनार्थेनानुषक्तं सहितमर्थान्तरमभिधीयते तत्रार्थान्तरन्यासः । यद्वा अनुषक्तमुपपादकम् । तथा च यत्र प्रस्तुतसामान्यविशेषान्यतररूपार्थस्योपपादनार्थं विशेषसामान्यान्यतररूपार्थाभिधानं तत्रायम् । अत एव काव्यलिङ्गाद्भेदः हेतुतारूपस्यार्थसमर्थकत्वस्य काव्यलिङ्गत्वात् । नह्यत्र सामान्यविशेषान्यतररूपोऽर्थो हेतुरपि तूपपादकः । उपपादकत्वं च निश्चयविषयीकरणत्वरूपं दृढीकरणम् । काव्यलिङ्गे तु व्याप्तिपक्षधर्मताबलेनोपपादनमिति भेदः । उदाहरति—हनूमानिति । अत्र दुष्करं किमिति मुख्योऽर्थस्तत्सहितं हनूमानित्याद्यभिहितम् । यद्वोभयोरपीदमुदाहरणं महात्मनां सर्वं सुकरमिति सामान्यार्थस्य हनूमत्कर्तृकाब्धितरणरूपविशेषस्य च मिथ उपपाद्योपपादकभावात् ॥ ६८ ॥

SGDF
Sri Gargeshwari Digital Foundation

यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः ।
स न जिग्ये महान्तो हि दुर्धर्षाः क्ष्माधरा इव ॥ ६९ ॥
कार्याद्यैः प्रस्तुतैरुक्ते पर्यायोक्तिं प्रचक्षते ।
तृणान्यङ्कुरयामास विपक्षनृपसद्मसु ॥ ७० ॥
उक्तिर्व्याजस्तुतिर्निन्दास्तुतिभ्यां स्तुतिनिन्दयोः ।
कस्ते विवेको नयसि स्वर्गं पातकिनोऽपि यत् ॥ ७१ ॥
आक्षेपस्तु प्रयुक्तस्य प्रतिषेधो विचारणात् ।
चन्द्र संदर्शयात्मानमथवास्ति प्रियामुखम् ॥ ७२ ॥

---

विकस्वरं लक्षयति—यस्मिन्निति । उपन्यस्तविशेषसमर्थनार्थं सामान्ये उपन्यस्तेऽपि तावताऽपरितोषात्पुनरुपमानभूतार्थविशेषोपन्यासेन तत्समर्थने विकस्वरालङ्कार इत्यर्थः । मध्यवृत्तिसामान्यस्य पूर्वोत्तराभ्यां विशेषाभ्यां स्फुटीकरणाद्विकस्वरत्वमिति भावः । उदाहरति—स न इति । अत्र केनचित्स कश्चित् क्रान्तो न जिग्ये जित इति विशेषोक्त्यनन्तरं महान्तो दुर्धर्षा इति सामान्ये उक्तेऽपि तत एव क्ष्माधरा इवेति पुना राजत्वपर्वतत्वान्यतरविशेषरूपेणाभिधानम् ॥ ६९ ॥

पर्यायोक्तिं लक्षयति—कार्याद्यैरिति । प्रकर्षेण स्तुतैः स्तुतिविषयैः कार्याद्यैः प्रस्तुते एव कारणादावुक्ते गम्ये पर्यायोक्तिः । कार्याद्यैरित्यादिना कारणसंबन्धिपरिग्रहः । अत्र कार्यादीत्युपलक्षणं न तु विशेषणम् । एवं च गम्यस्य विवक्षितस्वरूपादतिचमत्कारजनकस्वासाधारणधर्मेणाभिव्यञ्जने इयमिति भावः । उदाहरति—तृणेति । अत्र यः सोऽस्तीत्यादिना वाक्यार्थः पूरणीयः । अत्र कार्येण तृणाङ्कुरोत्पत्तिरूपेण शत्रूणां मरणरूपं प्रस्तुतमेव कारणमवगम्यते । तथा च वैरिभवननिष्ठतृणाङ्कुरोत्पादकत्वेन प्रस्तुतस्य राज्ञो गम्यत्वात् लक्ष्यत्वम् । अस्य भेदान्तरमप्यन्यत्रोक्तम् ॥ ७० ॥

व्याजस्तुतिं लक्षयति—उक्तिरिति । निन्दया स्तुतेः स्तुत्या वा निन्दाया उक्तिर्व्याजस्तुतिरित्यर्थः । तत्राद्यामुदाहरति—कस्ते इति । अत्र गङ्गाया निन्दाव्याजेन स्तुतिरिति निन्दास्तुतिः पर्यवसन्ना । 'खलाः किल कलौ काले केवलं न क्षतव्रताः । ये मौनमुद्रां मुञ्चन्ति न कदाचित्परस्तवे' इति स्तुतिद्वारा निन्दा बोध्या । अस्या भेदान्तरमप्यन्यत्रोक्तम् ॥ ७१ ॥

आक्षेपं लक्षयति—आक्षेप इति । प्रयुक्तस्योपमानत्वेन संमतस्य प्रेर-



SGDF
Sri Gurgeshwari Digital Foundation

गूढाक्षेपो विधौ व्यक्ते निषेधे चास्फुटे सति ।
हर सीतां सुखं, किं तु चिन्तयान्तकढौकनम् ।। ७३ ।।
विरोधोऽनुपपत्तिश्चेद्गुणद्रव्यक्रियादिषु ।
अमन्दचन्दनस्यन्दः स्वच्छन्दं दंदहीति माम् ।। ७४ ।।
श्लेषादिभूर्विरोधश्चेद्विरोधाभासता मता ।
अप्यन्धकारिणाऽनेन जगदेतत्प्रकाश्यते ।। ७५ ।।

---

णाविषयस्य विचारणादुपमेयमेवैतत्कार्यंक्षममिति विचारेण प्रतिषेध आनर्थक्यकथनम् आक्षेपालङ्कार इत्यर्थः । उदाहरति—चन्द्रेति । अत्रादौ चन्द्रदर्शनविधिः ततः प्रियामुखे जयिनि सति नोचितं तस्य दर्शनमिति प्रतिषेधः । अस्य भेदान्तरमप्यन्यत्रोक्तम् ।। ७२ ।।

गूढाक्षेपं लक्षयति—गूढेति । यत्र विधिः स्फुटो निषेधस्त्वस्फुटस्तत्र गूढाक्षेपः । उदाहरति—हरेति । सीताहरणोन्मुखं रावणं प्रति मारीचोक्तिः । सुखमिति क्रियाविशेषणम् । हे रावण त्वं सीतां सुखं यथा स्यात्तथा हर किं तु अन्तकस्य ढौकनं गतिं चिन्तय 'ढौकृ गतौ' । अत्र हरेत्यादिना विधिः स्फुटः किं त्वित्यादिना मृत्युभयप्रदर्शनेन निषेधस्यास्फुटत्वं च ।। ७३ ।।

विरोधं लक्षयति—विरोध इति । आदिना जातिः । गुणेत्यादिविषयसप्तमी । तथा च यत्र द्रव्यगुणक्रियाजातीनां मिथोऽनुपपत्तित्वं तत्र विरोधालङ्कारः । उदाहरति—अमन्देति । स्वच्छन्दमिति क्रियाविशेषणम् । दंदहीति यङ्लुङन्तम् । सः स्वच्छन्दं यथा तथा मां दंदहीतीत्यर्थः । अत्रामन्दता गुणश्चन्दनत्वं जातिः तदाश्रयो द्रव्यं स्यन्दः प्रस्रवणाक्रिया तेषां दाहक्रियान्वयविरोधी(?)तीदं चतुर्णां क्रियाविरोधे उदाहरणम् । अस्य दश भेदा अप्यन्यत्र । अयं प्रकाशदर्पणयोर्नोक्तः ।। ७४ ।।

विरोधाभासं लक्षयति—श्लेषादीति । वास्तवार्थकृतविरोधपरिहारफलकश्लेषादिकृतविरोधभाने विरोधाभासः वास्तवत्वं च तात्पर्यविषयीभूतत्वम् । उदाहरति—अप्यन्धेति । अनेन ज्योतिषा तद्रूपेण च । अत्रान्धकारवता जगत्प्रकाशनस्य विरुद्धत्वाद्विरोधभानम् । अन्धकवैरित्वेन महादेवभानेन तत्परिहारः ।। ७५ ।।

SGDF
Sri Gargeshwari Digital Foundation

असंभवोऽर्थनिष्पत्तावसंभाव्यत्ववर्णनम् ।
को वेद गोपशिशुकः शैलमुत्पाटयिष्यति ॥ ७६ ॥
विभावना विनापि स्यात्कारणं कार्यजन्म चेत् ।
पश्य लाक्षारसासिक्तं रक्तं त्वच्चरणद्वयम् ॥ ७७ ॥
विशेषोक्तिरनुत्पत्तिः कार्यस्य सति कारणे ।
नमन्तमपि धीमन्तं न लङ्घयति कश्चन ॥ ७८ ॥
आख्याते भिन्नदेशत्वे कार्यहेत्वोरसंगतिः ।
त्वद्भक्तानां नमत्यङ्गं भङ्गमेति भवक्रमः ॥ ७९ ॥

---

असंभवं लक्षयति—असंभव इति । भूतार्थनिष्पत्तेरसंभावितत्वेन कथनमसंभवालङ्कारः । उदाहरति—को वेदेति । अत्राल्पवयसा नारायणेन गोवर्धने कराङ्गुल्या उद्धृते को वेदेत्यादिना गोपबालकस्तमुद्धरिष्यतीति को वेदेत्यर्थकेन गोपानामसंभावितत्वेनोक्तिः ॥ ७६ ॥

विभावना लक्षयति—विभेति । कारणेन विना कार्योत्पत्तिकथनं विभावनालङ्कारः । उदाहरति—पश्येति । लाक्षारसेनाऽसिक्तमिति समासः । अत्र लाक्षारससेकरूपकारणं विनैव रक्तत्वरूपकार्यकथनम् । अत्र त्वच्चरणमिति पाठे नायिकां प्रति नायकोक्तिः । तदितिपाठे तु मित्रं प्रति नायकोक्तिः । अस्या भेदान्तरमप्यन्यत्र द्रष्टव्यम् ॥ ७७ ॥

विशेषोक्तिं लक्षयति—विशेषोक्तिरिति । कारणे सति कार्यानुत्पत्तिकथनं विशेषोक्त्यलङ्कारः । उदाहरति—नमन्तमिति । अत्र नमनरूपकारणे सत्यपि लङ्घनरूपकार्याभावः । नतो हि लङ्घयितुं शक्यः खर्वत्वात् । अस्या भेदान्तरमन्यत्र ॥ ७८ ॥

असंगतिं लक्षयति—आख्यात इति । कार्यकारणयोर्भिन्नदेशत्वकथनमसंगत्यलङ्कारः । उदाहरति—त्वदिति । ईश्वरं प्रति कस्यचिदुक्तिः । हे शिवेति शेषः । अत्र नमनाधिष्ठानभक्ताङ्गस्य भङ्गौचित्यात्संसारक्रमनिष्ठभङ्गस्य व्यधिकरणत्वात्तत्वम् । अस्या अपि भेदान्तरमन्यत्र । भवक्रमशब्देन परमेश्वरश्रम इति व्याख्या त्वनुचिता । अत्राख्याते इति पाठं धृत्वा यत्र भिन्नो न ख्यातस्तत्र वैयधिकरण्येऽसंगतिः । यत्र तु ख्यातस्तत्र न । यथा भ्रूचापवल्लीं सुमुखी यावन्नयति वक्रताम् । तावत्कटाक्षविशिखैर्भिद्यते हृदयं मम । अत्र वक्रतारूपस्य कारणस्य धनुर्वल्ल्या भेदस्य

SGDF
Sri Gargeshwari Digital Foundation

विषमं यद्यनौचित्यादनेकान्वयकल्पनम् ।
क्वातितीव्रविषाः सर्पाः क्वासौ चन्दनभूरुहः ॥ ८० ॥
सममौचित्यतोऽनेकवस्तुसंबन्धवर्णनम् ।
अनुरूपं कृतं सद्म हारेण कुचमण्डलम् ॥ ८१ ॥
विचित्रं चेत्प्रयत्नः स्याद्विपरीतफलप्रदः ।
नमन्ति सन्तस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ ८२ ॥
अधिकं बोध्यमाधारादाधेयाधिकवर्णनम् ।
यया व्याप्तं जगत्तस्यां वाचि मान्ति न ते गुणाः ॥ ८३ ॥

---

कार्यस्य भेदे एव दृष्टत्वेन वैयधिकरणस्यैव ख्यातत्वान्नासंगतिरिति कश्चित् ॥ ७९ ॥

विषमं लक्षयति—विषममिति । अनेकयोर्वस्तुनोरन्वयस्य संबन्धस्य कल्पनं वर्णनं प्रतीति शेषः यदि अनौचित्यम् अननुरूपत्वं तस्मादित्यर्थः । तथा चाननुरूपयोः संबन्धकल्पनमननुरूपसंबन्धकल्पनं वा विषमालङ्कार इति फलितम् । उदाहरति—क्वातीति । अत्र भुजगचन्दनयोस्तत् । अस्यापि भेदान्तरमन्यत्र ॥ ८० ॥

समं लक्षयति—सममिति । उचितसंबन्धकवस्तुद्वयकथनं समालङ्कारः । उचितत्वं च मिथः शोभाजनकत्वम् । अत्रापि प्राग्वदर्थो बोध्यः । उदाहरति—अनुरूपमिति । हारेण सद्म गृहं तद्रूपं कुचमण्डलमित्याद्यर्थः । अत्र हारकुचमण्डलयोर्मिथःशोभाजनकत्वाद् उचितं संबन्धवर्णनं तेनोक्तविषमप्रतिद्वन्द्वीदं समम् । अस्यापि भेदा अन्यत्र ॥ ८१ ॥

विचित्रं लक्षयति—विचित्रमिति । यत्र यदि विपरीतफलहेतुप्रयत्नवर्णनम् एकक्रियानुकूलः प्रयत्नस्तद्विरुद्धक्रियानिष्पादकतया वर्ण्यते इति यावत् । तत्र विचित्रालङ्कारः । अत्र फलमिष्टरूपं ग्राह्यम् । उदाहरति—नमन्तीति । अत्र नमनहेतुफलस्योन्नतिहेतुत्ववर्णनम् । अस्यापि भेदान्तरमन्यत्र ॥ ८२ ॥

अधिकं लक्षयति—अधिकमिति । यत्राधारस्याधिक्यमुपवर्ण्य तदपेक्षयाऽऽधेयाधिक्यवर्णनमधिकालङ्कारः । आधिक्यं परिमाणेन संख्यया च पृथुलाधारादिति पाठस्तूचितः । उदाहरति—ययेति । ईश्वरं प्रति भक्तो-

SGDF
Sri Gargeshwari Digital Foundation

अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् ।
त्रियामा शशिना भाति शशी भाति त्रियामया ॥ ८४ ॥
विशेषः ख्यातमाधारं विनाप्याधेयवर्णनम् ।
गतेऽपि सूर्ये दीपस्थास्तमश्छिन्दन्ति तत्कराः ॥ ८५ ॥
स्याद्व्याघातोऽयथाकारि वस्त्वन्यक्रियमुच्यते ।
यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः ॥ ८६ ॥
गुम्फः कारणमाला स्याद्यथाप्राक्प्रान्तकारणैः ।
नयेन श्रीः श्रिया त्यागस्त्यागेन विपुलं यशः ॥ ८७ ॥

---

क्तिः । अत्र जगद्व्यापकवाग्रूपाधारापेक्षया संख्यया भगवद्गुणरूपाधेयाधिक्यकथनम् । अस्यापि भेदान्तरमन्यत्र ॥ ८३ ॥

अन्योन्यं लक्षयति—अन्योन्यमिति । प्रसिद्धपरस्परोपकारकथनमन्योन्यालङ्कारः । उदाहरति—त्रियामेति । चन्द्रनिशयोः प्रसिद्धपरस्परशोभाजनकत्वमत्र बोध्यम् ॥ ८४ ॥

विशेषं लक्षयति—विशेष इति । प्रसिद्धाधारं विनाऽधेयवर्णनं विशेषालङ्कारः । उदारहति—गतेऽपीति । तत्कराः सूर्यकिरणाः । अत्र रविं विना तत्किरणवर्णनम् । अस्य भेदान्तरमप्यन्यत्र ॥ ८५ ॥

व्याघातं लक्षयति—स्यादिति । अयथाकारीति छेदः । अन्यक्रियं वस्तु अयथाकारि उच्यते चेदित्यर्थः । तथा च अन्यजनकत्वेन लोकप्रसिद्धस्य तद्विरुद्धकार्यजनकत्ववर्णनं व्याघातालङ्कारः । उदाहरति—यैरिति । कुसुमैरित्यर्थः । अत्र प्रीतिजनकत्वेन लोकप्रसिद्धकुसुमानां मारणक्रियाजनकत्ववर्णनम् । तस्य तन्मात्रायुधत्वात् । अत एव कुसुमायुध इत्येवोक्तम् । अस्यापि भेदान्तरमन्यत्र ॥ ८६ ॥

कारणमालां लक्षयति—गुम्फ इति । रचनाविशेष इत्यर्थः । यथाप्रागितिपदे इतरेतरद्वन्द्वपूर्वपदकर्मधारयोत्तरपदकवीप्सार्थकाव्ययीभावः । बहुलग्रहणदत्र । तथाचोत्तरकारणभूतपूर्वपूर्वैः पूर्वपूर्वकारणतोत्तरोत्तरैर्वा वस्तुभिः कृतो रचनाविशेषः कारणमाला । उदाहरति—नयेनेति । अत्र नयश्रीत्यागानां पूर्वपूर्वकारणानां वर्णनम् । द्वितीयोदाहरणं तु 'यशस्त्यागाच्छ्रिया त्यागः श्रीर्नयेन महीयसा' इति बोध्यम् ॥ ८७ ॥

SGDF
Sri Gargeshwari Digital Foundation

गृहीतमुक्तरीत्यर्थश्रेणिरेकावली मता ।
नेत्रे कर्णान्तविश्रान्ते कर्णौ दोर्मूलदोलिनौ ॥ ८८ ॥
दीपकैकावली योगान्मालादीपकमुच्यते ।
स्मरेण हृदये तस्यास्तेन त्वयि कृता स्थितिः ॥ ८९ ॥
सारो नाम पदोत्कर्षः सारताया यथोत्तरम् ।
सारं सारस्वतं तत्र काव्यं तत्र शिवस्तवः ॥ ९० ॥

---

एकावलीं लक्षयति—गृहीतेति । गृहीता मुक्ता च रीतिर्यत्प्रकारकं विशेष्यत्वं विशेषणत्वं च येषां तादृशानामर्थानां श्रेणिः पङ्क्तिस्तद्वर्णनम् एकावल्यलङ्कारः । उदाहरति—नेत्रे इति । अत्र नेत्रविशेषणत्वेन गृहीतयोः कर्णयोर्विशेषणत्वत्यागेन विशेष्यत्वोक्तिः । दोस्तम्भौ जानुपर्यन्तप्रलम्बौ तस्य भूभुज इत्युत्तरार्धं बोध्यम् ॥ ८८ ॥

मालादीपकं लक्षयति—दीपकेति । उक्तदीपकालङ्कारस्य एकावल्यलङ्कारयोगमात्रेण मालादीपकम् । उदाहरति—स्मरेणेति । तेन तदीयहृदा तस्या मनस्त्वय्येव लग्नं तिष्ठतीति नायकं प्रति दूत्युक्तिः । अत्र दीपकं स्फुटमेव, स्थितिरित्यस्योभयत्रान्वयात्, एकावल्यपि गृहीतत्यागादिति बोध्यम् । एवं चैकक्रियायोगेन पूर्वपूर्वस्योत्तरोत्तरगुणत्वे मालादीपकमिति फलितम् ॥ ८९ ॥

सारं लक्षयति—सार इति । नाम इति त्वर्थे । सारालङ्कारस्तु सारताया यथोत्तरं वीप्सायामव्ययीभावः । उत्तरमुत्तरं पदोत्कर्षः अत्यन्तोत्कर्ष इति केचित् । व्यवसितोत्कर्षो वस्तूत्कर्षो वेति त्वन्ये । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशः । यदोत्कर्ष इति पाठस्तु सुगम एव । नाम इति निश्चये इत्यन्ये । सारता चेति पाठे उत्कर्षरूपा सारता तु यदोत्तरोत्तरं निश्चयेन तदा सारालङ्कारः । चस्त्वर्थे । एतेनोत्कर्षान्यसारतायां नायमिति तन्निषेधाय चकार इत्यपास्तम् । अशब्दत्वात् तं विनापीष्टसिद्धेश्च । अयं च श्लाघ्यगुणोत्कर्षकथनेनाश्लाघ्यगुणोत्कर्षकथनेन च द्विविधो बोध्यः । तत्राद्यमुदाहरति—सारमिति । अत्र संसार इत्यादिः । सारस्वतं वाग्रूपं तथा चात्र सारस्वतकाव्यशिवस्तवानां यथोत्तरं श्लाघ्य उत्कर्ष इति तत्संगतिः । द्वितीयोदाहरणं तु 'पृथ्वी तावत् त्रिकोणा नगनगरवनग्रामवरुद्धं तदर्धं तत्राप्यर्धं युवत्यः शिशुगतवयसा

SGDF
Sri Gargeshwari Digital Foundation

उदारसारश्चेद्भाति भिन्नोऽभिन्नतया गुणः ।
मधुरं मधु पीयूषं तस्मात्तस्मात्कवेर्वचः ॥ ९१ ॥
यथासंख्यं द्विधार्थाश्चेत्क्रमादेकैकमन्विताः ।
शत्रुं मित्रं द्विषत्पक्षं जय रञ्जय भञ्जय ॥ ९२ ॥
पर्यायश्चेदनेकत्र स्यादेकस्य समन्वयः ।
पद्मं मुक्त्वा गता चन्द्रं कामिनीवदनोपमा ॥ ९३ ॥
परिवृत्तिर्विनिमयो न्यूनाभ्याधिकयोर्मिथः ।
जग्राहैकं शरं मुक्त्वा कटाक्षान् शत्रुयोषिताम् ॥ ९४ ॥

---

दूषितं तस्य चार्थम् । तत्र त्याज्याः स्वपुत्रश्वशुरगुरुजनैर्दूषितं तस्य चार्धं(?) मिथ्यावादोऽङ्गनानां मुखरमुखरवः पुंश्चली पुंश्चलीति' इति बोध्यम्॥९०॥

उदारसारं लक्षयति—उदारेति । यत्रोपमाननिष्ठगुणापेक्षयो-पमेयनिष्ठो गुण आधिक्येन कथ्यमानो भिन्नोऽपि शब्दमहिम्ना एकतया भासते तत्रोदारसारालङ्कारः । उदाहरति—मधुरमिति । तस्मान्मधुनः तस्मात्पीयूषात् । तस्मादस्मादिति पाठान्तरमात्रम् । अत्र मध्वादिमाधुर्या-पेक्षया काव्यनिष्ठमाधुर्यमधिकं कथ्यमानं रसनग्राह्यत्वस्य तत्र सत्त्वे-नात्र श्रोत्रग्राह्यत्वेन वस्तुतो भिन्नमपि मधुरशब्दमहिम्ना तत्त्वेनैकमेवा-वभासते ॥ ९१ ॥

यथासंख्यं लक्षयति—यथासंख्यमिति । द्विधाऽर्थाः क्रियाकारकरूपा द्विविधा अर्थाः, तेन कारकाणां क्रियाणां वा क्रमिकाणां क्रमेण कारकेषु क्रियासु वा प्रत्येकमन्वयो यथासंख्यालङ्कारः । उदाहरति—शत्रुमिति । एवं शुद्धकारकादेर्लक्ष्यमन्यत्र बोध्यम् ॥ ९२ ॥

पर्यायं लक्षयति—पर्याय इति । अत्र क्रमादित्यनुषज्यते, तेन विशेषा-लङ्कारव्यावृत्तिः । एकस्य क्रियाकारकान्यतररूपस्य तदन्यतररूपेण अनेकत्र क्रमेणान्वयवर्णनं पर्यायालङ्कारः । उदाहरति—पद्ममिति । अत्र पद्मचन्द्रयोः कारकयोरुपमारूपकारकस्य क्रमेण आधारत्वेनान्वयवर्ण-नम् । क्वचिद्वदनप्रभेति पाठः सोप्युक्तार्थ एव । अस्य भेदान्तरमन्यत्र॥९३॥

परिवृत्तिं लक्षयति—परीति । न्यूनेनाधिकस्याधिकेन न्यूनस्य वा ग्रह-णवर्णनं परिवृत्त्यलङ्कारः । इदमुपलक्षणं समेन समस्यापि । अत्र न्यूनत्वा-

SGDF
Sri Gargeshwari Digital Foundation

परिसंख्या निषिध्यैकमन्यस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु स्वान्तेषु न नतभ्रुवाम् ॥ ९५ ॥
विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः ।
कान्ताचित्तेऽधरे वापि कुरु त्वं वीतरागिताम् ॥ ९६ ॥

---

द्विकं संख्याकृतं स्वरूपकृतं च । तत्राद्यमुदाहरति—जग्राहेति । अत्रैकशरदानेन बहुकार्यवर्णनम् एकशरेण शत्रून्निर्जित्य तदीयस्त्रीकटाक्षजालभाजनत्वं गत इति भावः । समन्यूनोदाहरणं यथा—'दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ' अत्र पूर्वार्धे समेन समस्योत्तरार्धेऽधिकेन न्यूनस्य ग्रहणम् । भेदान्तरमप्यन्यत्र द्रष्टव्यम् ॥ ९४ ॥

परिसंख्यां लक्षयति—परीति । एकत्र वास्तवाभावकथनपूर्वकमन्यत्र वस्तुनियन्त्रणं परिसंख्या । अन्यस्मिन्निति पाठः । क्वचिदेकस्मिन्निति पाठः, युक्तश्चायम् । संख्यार्थोऽन्यार्थश्च मध्यमणिन्यायेनोभयान्वयी हि सः । उदाहरति—स्नेह इति । तन्नेति पाठे स्नेहस्तत्तस्मात्कारणात् प्रदीपेषु नेति न तु नतभ्रुवां स्वान्तेषु इत्यर्थेन स्नेहाभावस्य प्रदीपेषु निषेधपूर्वकं कान्ताचित्ते व्यवस्थापनम्। स्वयमिति पाठेऽपि नञः पूर्वमन्वयात्तथा स्नेहस्य तच्चित्ते व्यवस्थापनम् । स्नेहक्षय इति पाठे तु आद्यवत् । तत्रेति पाठे तु स्वान्ते निषेधपूर्वकं प्रदीपेषु स्नेहस्याप्यवस्थापनम् । इयमनेकविधेत्यन्यत्र स्पष्टम् ॥ ९५ ॥

विकल्पं लक्षयति—विकल्प इति । विरुद्धकार्यद्वयव्यञ्जकस्य युगपत्कर्तुमशक्यस्यात एव तुल्यबलस्य कार्यद्वयस्य युगपत्कथनं विकल्पालङ्कारः । चातुरीयुत इत्यस्य सहृदयंगम इत्यर्थः । तेन व्रीहियवादिविकल्पनिरासः । उदाहरति—कान्तेति । खण्डितोक्तिर्नायकं प्रति कान्ताया मम चितेऽन्तःकरणे स्वीयाधरे वाऽनुरागशून्यत्वं रक्तिमाशून्यत्वं च कुर्वित्यर्थः । वापीति पाठः अपिर्वाक्यालङ्कारे । चापीत्यपपाठः । क्वचिदिदमलङ्कारद्वयं न दृश्यते । मय्यनुरागस्य स्वाधरेऽन्यनायिकादत्तरक्तिम्नश्च युगपन्निषेधोक्त्या नायिकयोर्युगपदनुरागासंभवव्यञ्जनाल्लक्षणसंगतिः । एकदेशीतिवद्वीतरागितेति प्रयोगः ॥ ९६ ॥

SGDF
Sri Gargeshwari Digital Foundation

भूयसामेकसंबन्धभाजां गुम्फः समुच्चयः ।
नश्यन्ति पश्चात्पश्यन्ति भ्रश्यन्ति च तव द्विषः ॥ ९७ ॥
समाधिः कार्यसौकर्यं कारणान्तरसंनिधेः ।
उत्कण्ठितां च कलयन् जगामास्तं च भानुमान् ॥ ९८ ॥
प्रत्यनीकं बलवतः शत्रोः पक्षे पराक्रमः ।
जैत्रनेत्रानुगौ कर्णावुत्पलाभ्यामधःकृतौ ॥ ९९ ॥
प्रतीपमुपमानस्य हीनत्वमुपमेयतः ।
दृष्टं चेद्वदनं तस्याः किं पद्मेन किमिन्दुना ॥ १०० ॥
उल्लासोऽन्यमहिम्ना चेद्दोषो ह्यन्यत्र वर्ण्यते ।
तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम् ॥ १०१ ॥

---

समुच्चयं लक्षयति—भूयसामिति । बहूनामिति क्वचित्पाठः । अनेकक्रियाणामनेकगुणानामनेककारकाणां वा युगपत् एकत्र संबन्धकथनं समुच्चयालङ्कारः । उदाहरति—नश्यन्तीति । अत्र नाशावलोकनभ्रंशानामेकशत्रुगतत्वम् । राजानं प्रति कव्युक्तिः । नाशोऽत्र राज्यच्युतिः । भेदान्तरमन्यत्र ॥ ९७ ॥

समाधिं लक्षयति—समाधिरिति । कार्योत्पत्तिक्षमकारणसत्त्वेऽपि अविलम्बेन कार्योत्पादनार्थङ्कारणान्तरकथनं समाधिः । तेन समुच्चयाद्भेदः । उदाहरति—उत्कण्ठेति ।·········प्रियासंगमोत्सुकतां नायके वा कलयन्नित्यर्थः । तेन तस्यास्तस्य वोत्कण्ठारूपमुत्सुक(?)तत्क्षमकारणसत्त्वेऽपि झटिति कार्यसिद्धिः सूर्यास्तकथनेनोक्तेति भावः । उत्कण्ठतामिति पाठान्तरं तत्र अर्शआदित्वादच् ॥ ९८ ॥

प्रत्यनीकं लक्षयति—प्रत्यनीकमिति । बलवच्छत्रुपराभवासमर्थकर्तृकशत्रुसंबन्धिपदार्थपराभववर्णनं प्रत्यनीकालङ्कारः । उदाहरति—जैत्रेति । अत्रोत्पलाभ्यां स्वजैत्रे नेत्रे जेतुमशक्येऽतो नेत्रयोः कर्णान्तविश्रान्ततया तदनुगतौ कर्णौ स्वभूष्यतयाऽधरीकृताविति वर्णनाल्लक्ष्यत्वम् ॥ ९९ ॥

प्रतीपं लक्षयति—प्रतीपमिति । उपमेयापेक्षयोपमानस्य हीनतावर्णनं प्रतीपालङ्कारः । उदाहरति—दृष्टमिति । अत्र किं पद्मेनेति काका कार्याभावकथनेन न्यूनता । भेदान्तरमप्यन्यत्र ॥ १०० ॥

उल्लासं लक्षयति—उल्लास इति । यदि अन्यमहिम्ना अन्यगुणेना-

SGDF
Sri Gargeshwari Digital Foundation

तद्गुणः स्वगुणत्यागादन्यतः स्वगुणोदयः ।
पद्मरागारुणं नासामौक्तिकं तेऽधराश्रितम् ॥ १०२ ॥
पुनः स्वगुणसंप्राप्तिर्विज्ञेया पूर्वरूपता ।
हरकण्ठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ १०३ ॥

---

न्यत्र दोषवर्णनं तदोल्लासः । इदमुपलक्षणमन्यदोषेणान्यगुणवर्णनम् । अन्यदोषेणान्यदोषवर्णनमन्यगुणेनान्यगुणवर्णनं च स इत्यपि बोध्यम् । इदं च चार्थकहिना समुचितमिति बोध्यम् । तत्राद्यमुदाहरति—तदभेति । अत्र सज्जनमहिम्ना धनस्यैव तदनाश्रयणं दोषः । द्वितीयोदाहरणं यथा 'लाभोऽयमेव भूपाल सेवकानां न चेद्वधः' इति । अत्र राज्ञः क्रौर्यदोषेण सेवकानां वधाभावो गुणः । तृतीयोदाहरणं यथा 'काठिन्यं कुचयोः स्रष्टुं वाञ्छन्त्यः पादपद्मयोः । निन्दन्ति च विधातारं त्वद्वाटीष्वरियोषितः' इति । राजानं प्रति युद्धयात्रायां कव्युक्तिः । तयोः काठिन्यं पादपद्मयोः स्रष्टुं वाञ्छन्त्य इत्यन्वयः । कुचयोरित्यस्य कृतमिति शेषः । तत्संबन्धीति वा पलायनार्थमपेक्षितं पादयोः काठिन्यमकृत्वा कुचयोः काठिन्यं कृतवतो विधेः पदमार्दवदोषेण दोषः । तुर्योदाहरणं यथा—'परदारपरद्रव्यपरद्रोहपराङ्मुखः । गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति' इति । अत्र तादृशपुरुषगुणेन गङ्गागुणः । अन्ये तु यन्निष्ठो दोषस्तन्निष्ठगुणकथनद्वारा तस्य दोषस्यान्यनिष्ठत्वेन कथनमुल्लासः सज्जननिष्ठधनराहित्यदोषस्य सज्जनत्वेन गुणवत्त्वस्य कथनात्तद्वारा गुणवदनाश्रयणत्वेन धननिष्ठत्वेन वर्णनाल्लक्ष्यत्वमित्याहुः ॥ १०१ ॥

तद्गुणं लक्षयति—तद्गुण इति । स्वस्मिन् गुणोदयः स्वगुणोदयः । स्वस्मिन्स्वगुणत्यागेनान्यनिष्ठगुणसंबन्धकथनं तद्गुणालङ्कारः । उदाहरति—पद्मेति । नायिकां प्रति नायकोक्तिः । यतस्ते अधराश्रितम् अधरोष्ठसंलग्नं नासामौक्तिकमतः पद्मरागवदारक्तमणिवदारक्तमेवेत्यर्थः । अत्र नासामौक्तिके श्वेतत्वत्यागेनाधरोष्ठगुणसंबन्धेन पद्मरागत्ववर्णनम् । स्वगुणत्यागे स्वास्मिन्परगुणोदय इति पाठान्तरं तत्र सत्सप्तमी बोध्याऽऽद्या ॥ १०२ ॥

पूर्वरूपं लक्षयति—पुनरिति । यत्र अन्यगुणसंबन्धकथनपूर्वकं पुनः स्वगुणसंबन्धकथनम् । अन्यगुणसंबन्धेनान्यथाभूतस्य पुनरन्य-

SGDF
Sri Gargeshwari Digital Foundation

यद्वस्तुनोऽन्यथारूपं तथा स्यात्पूर्वरूपता ।
दीपे निर्वापिते ह्यासीत्काञ्चीरत्नैरहर्महः ॥ १०४ ॥
सङ्गतान्यगुणानङ्गीकारमाहुरतद्गुणम् ।
विशन्नपि रवेर्मध्यं शीत एव सदा शशी ॥ १०५ ॥
प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसंनिधेः ।
कर्णोत्पलानि दधते कटाक्षैरपि नीलताम् ॥ १०६ ॥
अवज्ञा वर्ण्यते वस्तु गुणदोषाक्षमं यदि ।
म्लायन्ति यदि पद्मानि का हानिरमृतद्युतेः ॥ १०७ ॥

---

गुणसंबन्धेन यथास्थितत्ववर्णनमिति यावत्। तत्र पूर्वरूपालङ्कारः । उदाहरति—हरेति । अत्र अन्यदीयश्यामगुणसंबन्धपूर्वकं श्वेतत्वकथनम् । लिप्तोऽपीत्यनेन प्राक् श्वेतत्वसूचनम् । अत एव लक्षणे पुनःपदं तेन च प्रतिप्रसवः सूचितः । राजानं प्रति कव्युक्तिः ॥ १०३ ॥

प्रकारान्तरेण पूर्वरूपं लक्षयति—यदिति । पुनरित्यस्यानुषङ्गः । यत् वस्तुनोऽन्यथा उच्छिन्नं नष्टमिति यावत् । ईदृशं रूपं पुनस्तथा स्यात्पुनस्तथा भवति तदपि पूर्वरूपं भवतीत्यर्थः । वस्तुनाशकथनपूर्वकं वस्त्वन्तरेण तद्वस्तुकार्यकथनं पूर्वरूपालङ्कार इति यावत् । उदाहरति—दीपे इति । अत्र दीपे निर्वापिते नाशितेऽपि काञ्चिसंबन्धिरत्नकान्तिभिर्दिनसंबन्धि महः तेज उत्सवो वा आसीदित्यर्थः । पूर्वत्र तु नोच्छेदः किं त्वन्यथाभावः । अत्र तु उच्छेद एवेति द्वयोर्भेद इति भावः ॥ १०४ ॥

अतद्गुणं लक्षयति—संगतेति । संगतान्यसंबन्धिगुणेत्यर्थः । संबन्धेऽपि संबन्धिगुणाग्रहणकथनमतद्गुणालङ्कारः । उदाहरति—विशन्निति । अत्र रविसंबन्धेऽपि तद्गुणाग्रहणवर्णनम् । इदं चैकराशिस्थत्वे तयोर्बोध्यम् ॥ १०५ ॥

अनुगुणं लक्षयति—प्रागिति । प्राक्सिद्धस्यैव स्वगुणस्य परसांनिधानादुत्कर्षवर्णनमनुगुणालङ्कारः । कश्चित्तु प्राक्सिद्धिं लक्षयति—प्राक्सिद्धिरिति । परसंनिधानादनुगुणस्वगुणोत्कर्षवर्णनं प्राक्सिद्ध्यलङ्कार इत्याह । उदाहरति—कर्णोत्पलानीति । अत्रावतंसीकृतनीलोत्पलेषु कटाक्षसंनिधानेनानुगुणप्राक्सिद्धस्वगुणोत्कर्षकथनम् ॥ १०६ ॥

अवज्ञां लक्षयति—अवज्ञेति । अन्यगुणदोषाभ्यामन्यत्र गुणदोषयोर-

SGDF
Sri Gargeshwari Digital Foundation

प्रश्नोत्तरं क्रमेणोक्तौ स्यूतमुत्तरमुत्तरम् ।
यत्राऽसौ वेतसी पान्थ तत्रासौ सुतरा सरित् ॥ १०८ ॥
पिहितं परवृत्तान्तज्ञातुरन्यस्य चेष्टितम् ।
प्रिये गृहागते प्रातः कान्ता तल्पमकल्पयत् ॥ १०९ ॥

---

नारोपणीयत्वकथनमवज्ञालङ्कारः । उदाहरति—म्लायन्तीति । अत्र म्लायन्तीति पद्मदोषेण चन्द्रे दोषालाभस्य वर्णनम् ॥ १०७ ॥

प्रश्नोत्तरं लक्षयति—प्रश्नोत्तरमिति । क्रमेणोक्ताविति पाठः । प्रश्नोत्तरयोरिति शेषः । यत्र तयोः क्रमेणोक्तौ तयोरेवोत्तरमुत्तरं प्रश्नरूपमुत्तररूपं वा यत्र स्यूतं संलग्नम् आक्षेपलभ्यमिति यावत्, तत्र प्रश्नोत्तरालङ्कार इत्यर्थः । तेन प्रश्नेनोत्तरकल्पने उत्तरेण वा प्रश्नकल्पने प्रश्नोत्तरालङ्कार इति यावदिति केचित् । अन्ये तु प्रश्नोत्तरक्रमेणोक्ताविति पाठमङ्गीकृत्य यत्र प्रश्नोत्तरयोः क्रमेणोक्तौ स्यूतमव्यवहितम् उत्तरं निबध्यते तत्रोत्तरनामालङ्कारः । तेन व्युत्क्रमनिबन्धने व्यवहितनिबन्धने च नालङ्कारः। स्यूतमित्युत्तरोत्तरसंबद्धम् । यथोदाहृत एवोत्तरद्वयप्रतीताविति कश्चिदित्याहुः । अपरे तु पूर्वपाठमङ्गीकृत्य कयोश्चित्क्रमेणोक्तौ प्रश्नोत्तरालङ्कारः उत्तरोत्तरं प्रश्नोत्तरभावे स्यूतालङ्कार इत्यर्थः । इदं द्वयमपि द्विधा शाब्दमाक्षेपलभ्यं च । तत्र द्वितीयोदाहरणमाहेत्याहुः । मम तु प्रतिभाति—पूर्व एव पाठः प्रश्नोत्तरक्रमोक्तौ तु इति वा पाठः । अन्यतरत्र शेषपूरणसाम्यात् । तथा च तयोः क्रमोक्तौ कथनीयायामुत्तरमुत्तरं यावदुत्तरं स्यूतमभिवाञ्छितोत्तरान्तरेण संलग्नं यत्र वर्ण्यते तत्र प्रश्नोत्तरनामालङ्कारः । यद्वा तत्रोत्तरं तादृशं वर्ण्यते यत्र तत्रोत्तरनामालङ्कारः इति । उदाहरति—यत्रासाविति । वेतसीपन्था इत्यपपाठः । यत्रैव वेतसी पान्थेति कचित्पाठः । अत्र पान्थस्य कुत्र सरित्तरणमार्ग इति प्रश्ने आक्षेपलभ्ये यत्रासौ वेतसीति कामयमानाया उत्तरम् । वेतसीकुञ्जे स्वाच्छन्द्यमिति भावः । अत्रैव कामयमानस्य काकूक्त्या प्रश्ने संकेतस्थलं मया कथितमित्यङ्गीकाररूपमुत्तरं कल्प्यमिति लक्षणसंगतिः । नेदमनुमानान्तर्गतं साधननिर्देशाभावात् । नापि काव्यलिङ्गमुत्तरस्य प्रश्नं प्रत्यजनकत्वात् ॥ १०८ ॥

पिहितं लक्षयति—पिहितमिति । परसंबन्धिवृतान्तसंबन्धिज्ञानाश्रयस्यान्यस्य चेष्टेत्यर्थः । परवृत्तान्तज्ञानपूर्वकं तदनुगुणान्यक्रियाकथनं

SGDF
Sri Gargeshwari Digital Foundation

व्याजोक्तिः शङ्कमानस्य छद्मना वस्तुगोपनम् ।
सखि पश्य गृहारामपरागैरस्मि धूसरा ॥ ११० ॥
वक्रोक्तिः श्लेषकाकुभ्यां वाच्यार्थान्तरकल्पनम् ।
मुञ्च मानं दिनं प्राप्तं मन्द नन्दी हरान्तिके ॥ १११ ॥
स्वभावोक्तिः स्वभावस्य जात्यादिषु च वर्णनम् ।

---

पिहितालङ्कारः । उदाहरति—प्रिये इति । अत्र तल्पकल्पनस्य रात्रावन्यत्र श्रान्तोऽसीति शयनं कुर्विति अन्यकान्तासंगज्ञानपूर्वकत्वम् । नाहं त्वच्चरितानभिज्ञेति तथाचेष्टाया अभिप्रायः ॥ १०९ ॥

व्याजोक्तिं लक्षयति—व्याजोक्तिरिति । परभीत्या अन्यथा वस्तुतः शङ्कमानं प्रति अन्यथा व्याजेन कथनद्वारा तद्वस्तुगोपनं व्याजोक्त्यलङ्कारः । उदाहरति—सखीति । चौर्यरतवृत्तधूलिसंबन्धत्वेऽपि गृहारामेत्यादिकथने गुप्तसुरतगोपनम् । मे देहे एते परागा न धूलिरिति । भेदान्तरमप्यन्यत्र द्रष्टव्यम् । शङ्कमानस्येति पाठः । शेषे षष्ठी । केनचित्सम्यगिति पाठान्तरं तत्र श(ङ्?)क्यायामिति शेषः । केनचित्प्रकारेण परभीत्ये(?त्यामि)त्यर्थः । सम्यगित्यस्य श(ङ्?)क्यायामित्यत्रान्वयः ॥११०॥

वक्रोक्तिं लक्षयति—वक्रोक्तिरिति । शब्दार्थश्लेषाभ्यां मिलिताभ्यां व्यस्ताभ्यां वा काकूक्त्या वा वाच्यार्थापेक्षया वाच्यार्थान्तरकल्पनं वक्रोक्त्यलङ्कारः । उदाहरति—मुञ्चेति । अत्र मानं मुञ्च दिनं प्राप्तमित्याशयेन कान्तेनोक्ते सति कान्ता शब्दश्लेषेण नन्दिनं प्राप्तं मा मुञ्चेत्यर्थं कल्पयित्वाह—मन्द मूर्ख मम नन्दिनो बलीवर्दस्य कुतः प्राप्तिस्तस्य महादेवसमीपे स्थितेरत्राभावात् । श्लेषयोः काकोश्चोदाहरणे यथा—'अङ्गुल्या कः कपाटं घटयति कुटिलो माधवः किं वसन्तो नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः । नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः किं कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥' 'उपकृतं बहु नाम किमुच्यतां सुजनता भवता प्रथिता परम् । विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥' अत्रापकारिण्यन्वयायोग्यैरुपकृतादिपदैः स्वार्थविपरीतं लक्ष्यते । न च तत्र वाच्यस्य कथंचित्प्रवेशः तवोपकारापकारविवेको नास्तीति व्यङ्ग्यम् ॥१११॥

स्वभावोक्तिं लक्षयति—स्वभावोक्तिरिति । चस्त्वर्थे । जात्यादिषु हरि-



SGDF
Sri Gargeshwari Digital Foundation

कुरङ्गैरुत्तरङ्गाक्षि स्तब्धकर्णैरुदीक्ष्यते ॥ ११२ ॥
भाविकं भूतभाव्यर्थसाक्षाद्दर्शनवर्णनम् ।
अलं विलोकयाद्यापि युध्यन्तेऽत्र सुरासुराः ॥ ११३ ॥
देशात्मविप्रकृष्टस्य दर्शनं भाविकच्छविः ।
त्वं वसन् हृदये तस्याः साक्षात्पश्येषुरीक्ष्यसे ॥ ११४ ॥
उदात्तमृद्धिश्चरितं श्लाघ्यं चान्योपलक्षणम् ।

---

णत्वादिषु सत्सु यत्स्वभावस्य वर्णनं तत्तु सेत्यक्षरार्थः । जात्याद्यनुरूपस्वभावकथनं स्वभावोक्त्यलङ्कारः । स्वजात्यादिष्विति पाठान्तरम् । उदाहरति–कुरङ्गैरिति । नायिकां प्रति नायकोक्तिः हे उत्तरङ्गाक्षि चञ्चलाक्षि कुरङ्गैर्हरिणैः । उत्तरङ्गाक्षैरिति पाठे हरिणविशेषणम् । अत्र स्तब्धकर्णैरिति मृगजातिस्वभाववर्णनम् ॥ ११२ ॥

भाविकं लक्षयति–भाविकमिति । भूतानां भाविनां वा अर्थानां साक्षात्कारस्य वर्णनं भाविकालङ्कारः । भव्यार्थे इति पाठे भूतस्य भव्यस्य प्रशस्तस्यार्थस्येत्यर्थः । भाविनोऽप्युपलक्षणमिदं तदा बोध्यम् । भावः कवेरभिप्रायो यत्रास्तीति योगार्थः । उदाहरति–अलमिति । पर्याप्तमत्यन्तं वेत्यर्थः । रणभूमिवर्णनमिदम् । अत्र रणभूमौ युध्यन्ते इति भूतदेवदैत्यसंग्रामस्य वर्तमानत्वेन कथनात्तादृशयुद्धविलोकनकथनमिति भावः । स्थलभीषणतोपवर्णनायातीतस्य युद्धस्य वर्तमानप्रेक्षणवर्णनमिति तात्पर्यम् । यथा वा । 'आसीदञ्जनमत्रेति पश्यामि तत्र लोचने । भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम् । अत्राद्यर्थे भूतस्य, द्वितीये भाविनो दर्शनम् । न चायं प्रसादाख्यो गुणः भूतभाविनोः प्रत्यक्षाप्रमाणत्वे तस्याहेतुत्वात् । नाद्भुतो रसः विस्मयं प्रत्यस्याहेतुत्वात् । नातिशयोक्तिरध्यवसायाभावात् ॥ ११३ ॥

भाविकच्छविं लक्षयति–देशेति । देशेनात्मना वा विप्रकृष्टस्यार्थस्य साक्षात्कारो यत्र वर्ण्यते तत्र भाविकच्छविनामालङ्कारः । उदाहरणं, त्वमिति । अत्रोभयतो विप्रकृष्टा नायिकामुद्दिश्य नायकं प्रति दूतीवाक्ये तादृश(स्य?) अन्यहृदयनिष्ठतया विप्रकृष्टस्य कामाभिन्नस्य दर्शनवर्णनम् ॥ ११४ ॥

उदात्तं लक्षयति–उदात्तमिति । यत्र श्लाघ्या ऋद्धिः संपदाधिक्यं

SGDF Sri Gargeshwari Digital Foundation

**सानौ यस्याभवद्युद्धं तद्धूर्जटिकिरीटिनोः ॥ ११५ ॥**
**अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम् ।**
**त्वयि दातरि राजेन्द्र याचकाः कल्पशाखिनः ॥ ११६ ॥**
**रसभावतदाभासभावशान्तिनिबन्धनाः ।**
**रसवत्प्रेयऊर्जस्वित्समाहितमयाभिधाः ॥ ११७ ॥**

---

श्लाघ्यं चरितं वा अन्योपलक्षणत्वेन कथ्यते तत्रोदात्तालङ्कारः । अन्योपलक्षणमिति श्लाघ्यमिति च चरितस्यैव विशेषणमिति कश्चित् । तत्र द्वितीयमुदाहरति—सानाविति । अत्र किंचित्पर्वतशिखरस्थे युद्धे भवार्जुनसंबन्धित्वोपलक्षकत्ववर्णनम् । यस्य हिमालयस्य सानौ शृङ्गे । अन्यत्र त्वन्यथाऽयमुक्तः ॥ ११५ ॥

अत्युक्तिं लक्षयति—अत्युक्तिरिति—अद्भुतमनन्यसाधारणमतथ्यमसत्यं शौर्यदानादिवर्णनमत्युक्तिनामालंकारः । उदाहरति—त्वयीति । अत्र कल्पवृक्षा अपि त्वां याचन्त इति तव याचकाः कल्पवृक्षतुल्या दातारो जाता इति वा मिथ्यादानात्युक्तिः । एवमलङ्काराः प्रतिपादिताः । अन्यत्र त्वन्येऽपि केचनोक्ताः ॥ ११६ ॥

अथ केषांचिदालङ्कारिकाणां मतमाह पद्यद्वयेन—रसेति । रसाश्च भावाश्च तदाभासाश्च रसाभासा भावाभासाश्च भावशान्तिश्च तन्निबन्धनास्तद्धेतुका रसवत्प्रेय ऊर्जस्वित्समाहितं युक्तिसिद्धतया समाधानं भावे क्तः । तन्मय्यस्तद्रूपा अभिधाः नामानि येषां ते तन्मयाभिधा इत्यर्थः । यद्वा तन्मय्यः आभिदाः भेदाः येषां ते कर्मधारयो वा । तन्मयीभिदेति पाठे निबन्धनेति निर्विसर्गः पाठः । तद्भिन्नं पदं तद्धेतुका तद्रूपा भिदा भेद इत्यर्थ आद्यश्लोकस्य । तत्र यत्र रसो रसान्तरस्य भावस्य वाङ्गत्वेन कथ्यते तत्र रसवदलङ्कारः । निर्वेदादित्रयस्त्रिंशद्भेदो भावः गुरुनृपदेवताविषयरतिरूपो भावश्च यत्र पराङ्गत्वेन कथ्यते तत्र प्रेयोलङ्कारः । अनौचित्येन प्रवृत्तौ रसभावौ रसाभासभावाभासत्वेन प्रसिद्धौ तौ यत्र पराङ्गत्वेन कथ्येते तत्र तत्रोर्जस्विदलङ्कारः । भावस्य प्रशाम्यदवस्था न्यूनत्वरूपा भावशान्तित्वने प्रसिद्धा सा यत्र पराङ्गत्वेन कथ्यते तत्र समाहितालङ्कार इति भावः ॥ ११७ ॥

SGDF
Sri Gurgeshwari Digital Foundation

भावानामुदयः सन्धिः शबलत्वमिति त्रयः ।
अलङ्कारानिमान्सप्त केचिदाहुर्मनीषिणः ॥ ११८ ॥
शुद्धिरेकप्रधानत्वं तथा संसृष्टिसंकरौ ।
एतेषामेव विन्यासान्नालङ्कारान्तराण्यमी ॥ ११९ ॥

---

भावानामिति—पूर्वमेलनेन सप्तेत्यर्थः । भावानामाधिक्यमुदयः द्वयोर्भावयोः परस्परस्पर्धा सन्धिः । बहूनां भावानां पूर्वपूर्वोपमर्देनोत्पत्तिः शबलता । कश्चित् भावद्वयस्य क्रमेण कथने सन्धिः अक्रमेण कथने शबलतेत्याह्—एतेषामन्याङ्गत्वकथने त्रयः । एवं च चतुर्विधपूर्वमिलिता ऐत त्रयः । रसवत्प्रेयऊर्जस्वित्समाहितभावोदयभावसंधिभावशबलताख्याः सप्तालङ्काराः सिद्धा इति केषांचिन्मतम् । केचिदित्यरुचिबीजं तु अलङ्काराणां शब्दार्थनिष्ठोपकारजननद्वारा रसोपकारकत्वम् । रसस्तु व्यङ्ग्यतया सर्वप्रधानीभूतत्वादलङ्कार्य इति तस्य शब्दार्थरूपान्योपकारकत्वासंभवान्नालङ्कारत्वं संभवति । भावानामपि नीरसे काव्ये प्राधान्यमव्याहतमेवातो नैषामलङ्कारतायाः संभव इति । केचित्त्वत्र रसाद्युपकारकत्वमात्रेणालङ्कारशब्दप्रयोगो भाक्त इत्याहुः । ध्वनिकारास्तु अलङ्काराणां रसोपकारकत्वे शब्दार्थनिष्ठचमत्कारजननमेव न द्वारं मानाभावात् । रूपकादौ सतोऽपि तस्यार्थिकतयाऽप्रयोजकत्वात् । किं तु यथाकथंचिद्रसोपकारकत्वमात्रं साक्षात्परंपरासाधारणं तेन रसादीनामपि रसोपकारकत्वे भवत्येवालङ्कारत्वम् । यथाहुः--' प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः । काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः' इति । अत एतेषां युक्तमलङ्कारत्वमित्याहुः । एवं च केचिदिति पूजार्थं न निषेधार्थमेवं चालङ्कारिकैकवेद्या एते इति तत्त्वम् ॥ ११८ ॥

शुद्ध्यादीनां चतुर्णामलङ्कारान्तरत्वं निराचष्टे—शुद्धिरिति पद्येन । यत्रैक एवालङ्कारस्तत्र शुद्धिः, द्वयोरलङ्कारयोर्यत्रैकोऽलङ्कारोऽन्योपपादकस्तत्रैकप्रधानत्वं, परस्परानुपपादकयोर्द्वयोस्तिलतण्डुलन्यायेन प्राधान्ये संसृष्टिः, अलङ्कारयोर्नीरक्षीरन्यायेनाङ्गाङ्गिभावः सङ्करः, अङ्गाङ्गिभावाभावेन प्रधानयोरलङ्कारयोः संदेहो द्वितीयः सङ्करः, अलङ्कारद्वयस्यैकपदप्रतिपाद्यत्वं तृतीयः सङ्करः । तदुक्तम्—' अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः । एकस्य च ग्रहे न्यायदोषाभावादनिश्चयः । व्यवस्थि-

SGDF Sri Gargeshwari Digital Foundation

सर्वेषां च प्रतिद्वन्द्वप्रतिच्छन्दभिदाभृताम् ।
उपाधिः क्वचिदुद्भिन्नः स्यादन्यत्रापि संभवात् ॥ १२० ॥
माला परंपरा चैषां भूयसामनुकूलके ।
मनुष्ये भवतः क्वापि ह्यलङ्काराङ्गतां गते ॥ १२१ ॥

---

तिरलङ्कृत्योः पदैक्यानुप्रविष्टयोः.' इति । उत्तरार्धयोः सोऽपि संकर इत्यनुषज्यते । तथा चैतेषामेव प्रसिद्धानां प्रागुक्तानामलङ्काराणां विन्यासान्न शुद्ध्यादीनामलङ्कारान्तरत्वं क्रमभेदेऽपि तदर्थभेदाभावात् समुदायरूपानतिरेकात् । न च सरो रस इत्यादौ क्रमभेदेन पदार्थभेदादत्रापि भेदोऽस्त्विति वाच्यम् । तत्रापि वर्णभेदानङ्गीकाराद् अर्थगमकत्वरूपपदत्वावच्छिन्नस्यार्थभेदादेव भेदसिद्धेः । अतः क्वचिदेकस्यैव विन्यासः रूपक्रमभेदमात्रे तदलङ्कारबुद्ध्यनुदयान्नालंकारान्तरत्वम् । अन्यथा रसानामपि विन्यासभेदे रसान्तरत्वापत्तिरिति भावः । विज्ञानादिति पाठः क्वचित्, स्पष्टोऽर्थः । विन्यासा इति क्वचित्पाठस्तदा यतस्तत इति पूरणीयम् ॥११९॥

दूषणान्तरमाह—सर्वेषां चेति । एवं सति सर्वेषामन्येषामप्यलंकाराणां न्यूनाधिकरूपतया विसदृशानामलंकारत्वापत्तिः । यथा सादृश्यरूपकस्य पृथक्कथितसादृश्यरूपस्याधिक्यम् । इवादिपदाभावे लुप्तोपमाया न्यूनत्वम् । अतस्तत्र रूपकोपमातो भेदाभाववदुक्तस्थलेऽपि न भेद इति तात्पर्यार्थः । अक्षरार्थस्तु प्रतिद्वन्द्वता विरोधितया न्यूनता, प्रतिच्छन्दः आधिक्यं, ताभ्यां भेदभाजां सर्वेषामन्येषामलङ्काराणामुद्भिन्नः प्रकटः कथित उपाधिः प्रकारोऽन्यत्रापि संभवन्योजनीयः स्यादिति तेषामप्यलंकारान्तरत्वं स्यादिति । यद्वा प्रतिद्वन्द्वं विसदृशं प्रतिच्छन्दः सदृशं ताभ्यां भेदवतामित्यर्थः । एवं चालंकारपरिगणनमेव न स्यादिति भावः । एतेनात्र पूर्वार्धेन प्रतिद्वन्द्वादिर्लक्ष्यते । विसदृशसदृशरूपाणि पूर्वोक्तान्यलंकारान्तराणीति यावत् इति । द्वितीयार्धेनैकालंकारप्रकारोऽलंकारान्तरेऽस्तीति सोऽप्यूहनीय इत्युच्यते । इत्येवंपरमस्य व्याख्यानमपास्तम् । मूलस्वरसभङ्गापत्तेः ॥ १२० ॥

मालेति पद्यमलग्नकत्वात्कैश्चित्त्यक्तं तदसत् । सुयोजत्वात् । तथा हि नन्वेवं मालोपमादीनामप्यलंकारान्तरत्वं न स्यादिति चेत्तथैवेत्याह—मालेति । भूयसामलंकाराणामुक्तानामेषामुपमादीनां माला मालाकारेण

SGDF
Sri Gargeshwari Digital Foundation

विन्यासः, परंपरा रशनाद्याकारेण विन्यासश्चानुकूलके चमत्कारजनके भवतः । स्वार्थे कः । तत्र हेतुगर्भविशेषणं ह्यलंकाराङ्गतां गते । यतोऽलंकाराङ्गतां गते अलंकारोपकारकत्वं प्राप्ते इत्यर्थः । मनुष्ये इवेति दृष्टान्तवशात्काव्ये इत्यध्याहर्तव्यम् । क्वापीत्युभयविशेषणम् । एवं च क्वापि मनुष्ये यथाऽलंकाराणां माला परंपरा च तथैवानुकूलके शोभाजनके भवतस्तथा क्वापि काव्ये अलंकाराणां माला परम्परा च तेषां चमत्कारजनके भवतः तथा च मालोपमारशनोपमामालारूपकादीनामपि नालंकारान्तरत्वमलंकारान्तरत्वबुद्ध्यभावात्तदलंकारत्वबुद्ध्यनपायाच्चेति भावः । अथ रसवदादिक्रमेणोदाहरणानि । 'अयं स रसनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः' । अत्र शृङ्गारः करुणस्याङ्गम् । 'आमीलितालसविवर्तिततारकाक्षीं मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् । प्रस्वेदवारिकणिकाञ्चितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥' अत्र संभोगशृङ्गारः स्मरणभावस्याङ्गम् । स च विप्रलम्भस्येति प्रेयसोऽपीदमेवोदाहरणम् । 'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः । त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥' अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । 'त्वयि लोचनगोचरं गते सफलं जन्म नृसिंहभूपते । अजनिष्ट ममेति सादरं युधि विज्ञापयति द्विषां गणः ।' अत्र प्रभुविषयरतिभावस्य तद्विषयद्विषद्गतरतिरूपो भावाभासोऽङ्गम् । 'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥' अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् । 'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः । श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥' अत्र भावोदयो राजविषयरतिभावस्याङ्गम् । 'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका । सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥' अत्रौत्सुक्यलज्जयोः संधिर्देवताविषयरत्यङ्गम् । 'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥' अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता विप्रलम्भशृङ्गाराङ्गम् । 'हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ।' अत्र शुद्धिः । 'तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम् । शशाङ्कसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः ॥' अत्र शशाङ्कसिंहेन तमोगजानामिति

SGDF
Sri Gargeshwari Digital Foundation

रूपके उत्प्रेक्षाया अङ्गं तदुत्थापकत्वाद्रूपकाभावे हि छायाः लूनगात्रखण्डा इवावेपन्तेत्येतावदुक्तावुपमैव सिध्येत् वेपनादिसाधर्म्यात् । न छायानां सद्यःकृत्त गात्रखण्डतादात्म्यसंभावनरूपोत्प्रेक्षेत्यत्र एकप्रधानत्वम् । 'कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया । चलितया विदधे कलमेखलाकलकलोलकलोलदृशाऽन्यया ॥' अत्र शब्दार्थालङ्कारयोरनुप्रासोपमयोः संसृष्टिः । 'अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥' अत्राङ्गुलीभिरिति वाक्योक्त्या सरोजलोचनमिति समासोक्त्या चोपमयाऽङ्गभूतयोत्थाप्यमानैव शशिकर्तृकनिशामुखचुम्बनोत्प्रेक्षा निशाशशिनोर्दम्पतिव्यवहारसमासोक्तिगर्भैवोत्थाप्यते उपमयोरुभयत्रोत्थापकत्वाविशेषात् । समासोक्तिगर्भता विना चुम्बनोत्प्रेक्षाया निरालम्बनत्वाच्च । ततश्चात्रोत्प्रेक्षासमासोक्त्योरेककालयोः समप्राधान्यमिति समप्रधानसंकरः । 'विलीयेन्दुः साक्षादमृतरसवापी यदि भवेत्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनी । ततः स्नानक्रीडाजनितजडभावैरवयवैः कदाचिन्मुञ्चेयं मदनशिखिपीडाव्यतिकरम् ॥' अत्र पद्ये तावत्साधनं संपद्येत तदा तापः शाम्यतीत्येतावत्यर्थे कविसंरम्भश्चेत्तदोपात्तसिद्ध्यर्थमूह इति संभावनालङ्कारः । एतावत्साधनं कदापि न संभवत्येवातस्तापशान्तिरपि गगनकुसुमायमानेत्यर्थे कविसंरम्भश्चेत्तदोपात्तमिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनारूपा मिथ्याध्यवसितिरित्युभयथासंभवात्संदेहसंकरः । 'विधुकरपरिरम्भादात्तनिष्यन्दपूर्णैः शशिदृषदुपक्लृप्तैरालवालैस्तरूणाम् । विफलितजलसेकप्रक्रियागौरवेण व्यरचि स हृतचित्तस्तत्र भैमीवनेन ।' अत्र हि प्रतिपाद्यमानोऽर्थः समृद्धिमद्वस्तुवर्णनमुदात्तमितिलक्षणानुसारादुदात्तालंकाररूपः; असंबन्धे संबन्धकथनमतिशयोक्तिरिति लक्षणादतिशयोक्तिरूपश्च । नात्राङ्गाङ्गिभावः । एकेनापरस्यानुत्थापनात् । नापि समप्राधान्यं द्वयोस्तुल्यशब्दप्रतिपाद्यत्वेन भिन्नशब्दप्रयुक्तार्थभेदाभावात् । नापि संदेहसंकरः एकालङ्कारकोट्या तदन्यालंकारकोटिविरोधाभावात् । तस्मादेकत्र प्रतिपाद्येर्थेऽलङ्कारद्वयलक्षणयोगात्तयोरेकवाक्यानुप्रवेशलक्षणः संकरः । क्वचित्संकरसंकरोऽपि । यथा 'मुक्ताः केलिविहारसूत्रगलिताः संमार्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः । दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीला-

SGDF
Sri Gargeshwari Digital Foundation

शब्दे पदार्थे वाक्यार्थे वाक्यार्थस्तबके तथा ।
एते भवन्ति विन्यासाः स्वभावातिशयात्मकाः ॥ १२२ ॥
कस्याप्यतिशयस्योक्तेरित्यन्वर्थविचारणात् ।
प्रायेणामी ह्यलंकारा भिन्ना नातिशयोक्तितः ॥ १२३ ॥

---

यितम् ॥' अत्रोपपत्तिरन्यत्र स्पष्टा । 'यन्मध्यदेशादपि ते सूक्ष्मं लोलाक्षि दृश्यते । मृणालसूत्रमपि ते न संयाति स्तनान्तरे ॥' एतदधिकं विसदृशम् । 'मधुव्रतौघः कुपितः स्वकीयमधुप्रपापद्मनिमीलनेन । बिम्बं समाक्रम्य बलात्सुधांशोः कलङ्कमङ्के स्फुटमातनोति । एतत्प्रत्यनीकसदृशम् । 'अनवरतकनकवितरणजलसंभृतकरतरङ्गितार्थिततेः । भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव किर्तिरतिविमला । इयं साधारणधर्मेण रशनोपमा । मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावयुता । तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् । इयं धर्मभेदेन सा । 'किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति । नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितो मदनः ॥ 'अत्र रशनारूपकम् । 'अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता । जग्लौ साथ विषादेन पद्मिनीव हिमाम्भसा ॥ ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ' एते प्राग्वन्मालोपमे । एकस्यैव बहूपमानोपादानात् । 'अलौकिकमहालोकप्रकाशितजगत्त्रयः । स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान्' ॥ इदं मालारूपकम् ॥ १२१ ॥

परेषां मतं दूषयितुमुपन्यस्यति—शब्दे इत्यादिपद्यद्वयेन । तत्र शब्दे अनुप्रासयमकादयः । पदे इति क्वाचित्कपाठस्तु युक्त एव । पदार्थे उपमारूपकादयः वाक्यार्थे दृष्टान्तादयः वाक्यार्थस्तबके निदर्शनादयः । तथाशब्दः समुच्चये । एते अनुप्रासादयो विन्यासा रचनाविशेषाः स्वभावादतिशयोक्तिस्वभावादतिशयात्मकाः अतिशयोक्तितो न भिन्नाः ॥ १२२ ॥

तदेव स्पष्टयति—कस्येति सर्वत्रेत्यादिः । अमी अनुप्रासादयोऽलंकाराः सर्वे प्रायेणातिशयोक्तितो न भिन्नाः कस्यचिदतिशयस्योक्तिरतिशयोक्तिरित्यन्वर्थस्य सर्वेषु संभवात् । अतः सर्वेषां तद्रूपत्वमेव न भेदस्तत इति तेषा तदन्तर्भाव एवोचित इत्याशयः । यत्र न्यूनत्वकृत एव चमत्कारो नातिशयकृतस्तत्रास्तु अलंकारान्तरत्वमिति सूचतं—प्रायेणेति ।

SGDF
Sri Gargeshwari Digital Foundation

**अलंकारप्रधानेषु दधानेष्वपि साम्यताम् ॥**
**वैलक्षण्यं प्रतिव्यक्ति प्रतिभाति मुखेष्विव ॥ १२४ ॥**
**अलंकारेषु तथ्येषु यद्यनास्था मनीषिणाम् ॥**
**तदर्वाचीनभेदेषु नाम्नां नाम्नाय इष्यताम् ॥ १२५ ॥**

---

एतेन पदार्थे रूपकादयः उपमादयो वाक्यार्थे दृष्टान्तादयो वाक्यार्थस्तबके इति व्याख्यानमपास्तम् । उपमादीनां पदार्थवृत्तित्वात् । वस्तुतस्तु एवं योजने श्लोकयोः पौनरुक्त्यापात्तिः तस्मादित्थमर्थः । एवमलंकारानुक्त्वा तदाश्रयान्वदन् उपसंहरति पद्येन—शब्दे इति । विन्यासस्वभावातिशयात्मका इति समस्तः पाठः । पूर्वार्धस्योक्त एवार्थः । विन्यासश्च स्वभावश्चातिशयश्च एतत्त्रितयात्मकास्तत्तन्निष्ठा एतेऽलंकाराः प्रागुक्ता विन्यासादिस्वरूपा इत्यर्थः । तत्रोपमारूपकादयोऽनुप्रासादयश्च स्वभावातिशयवत् ततो भिन्ना विन्यासात्मकाः स्वभावात्मका अतिशयोक्तिप्रभृतयोऽतिशयात्मका इत्युत्तरार्धार्थः । अथ परेषा मतं दूषयितुमुपन्यस्याति—कस्येति । अस्य तु प्राग्वदेवार्थः । कस्यापीत्यस्य मते इति विशेष इति बोध्यम् ॥ १२३ ॥

दोषमेव स्वमतेनाह—अलंकारेति । साम्यतामित्यत्रैकोभावप्रत्ययश्छन्दानुरोधात् स्वार्थे, समतामित्यर्थः । अतिशयोक्तित्वेनालंकारत्वेन वा समेष्वपि उपमाद्यलंकारभेदेषु प्रतिव्यक्ति प्रातिस्विकवैलक्षण्यं प्रतिभाति प्रत्यक्षेणोपलभ्यते मुखत्वेन समानेषु मुखेष्विवेत्यर्थः । तथा च रसिकानामालंकारिकाणां स्वानुभवैकवेद्य एषां भेद इति तस्यापलापानर्हत्वमिति भावः ॥ १२४ ॥

उपसंहरति—अलंकारेष्विति । सुधीनां तथ्येष्वपि प्रतिस्वं भिन्नेषु कुण्डलादिषु नानास्था(?)नाग्रहो यदि तत् तदोपमालंकारेष्वपि जीर्णमुनिव्यवहारानुरोधेनार्वाचीनसकलकविकल्पितेषु नाम्नामुपमादिसंज्ञानामाम्नायः पाठो नेष्यतामित्यर्थः । नाम्नां नाम्नाय इष्यतामिति पाठोऽत्र मते । यद्वा यथाकथंचित्साम्येनोक्तभेदपुरस्कारेणोक्तेष्वप्यर्वाचीनभेदेषूपमादिषु उपमादिनाम्ना कृत्वा अनाम्नायः अकथनं यदि तत् तदा तथ्यकुण्डलकटकादयो भेदा अपि नाङ्गीकार्याः स्युस्तत्रापि यथाकथञ्चित्साधर्म्यसत्त्वात् । कुण्डलादिच्छाययैवात्रालंकारपदप्रयोगात् । अत्र पक्षे तथ्येषु कुण्डलादिषु मनीषिणामनास्था इष्यतामित्यन्वयः । अर्वाचीना उपमादयः नाम्नाऽनाम्नाय

SGDF
Sri Gargeshwari Digital Foundation

इति पाठः । कुण्डलादिभेदवदेवैतेषामपि भेद आवश्यको वैलक्षण्यानुभवादित्याशयः । यद्वा तथ्येषु अनुभवैकलेह्यभेदेषु यद्यनास्था तेषामनादरस्तदोपमादिषु तेषु उपमारूपकादिनाम्नां नाम्नायोऽनादरोऽस्तु, विजातीयबुद्धिकृतविषयभेदस्तु ब्रह्मणापि दुर्वार इत्यर्थः । अनुभवैकसिद्धोऽलंकारभेद इत्याशयः । यद्वा ननूपमादितो ग्रन्थान्तरसिद्धाद्भवताऽन्येप्यलंकारतया निरुक्तास्तत्र किं बीजमत आह—अलंकारेष्विति । तथ्यार्वाचीनयोः पूर्वग्रन्थलिखितैतद्ग्रन्थमात्रलिखितयोरलंकारताप्रयोजकधर्मसाम्येऽपि यदि तथ्ये नालंकारपदप्रयोगस्तदाऽर्वाचीनेऽपि मास्तु। तत्र सत्त्वे अत्रापि भवत्येव। तथा च प्राचीनैरनिबद्धानामपि स्वकल्पितानामलंकारताप्रयोजकरूपवत्त्वेन तत्त्वमुचितमेवेत्याशय इति दिक् । अथ दूष्यतामिति पाठान्तरम् । तत्राथशब्दोऽप्यर्थे। अन्यत् प्राग्वत् । विष्णुधर्मोत्तरे तु मार्कण्डेयेन वज्रं प्रति स्वल्पतरा अलंकारा उक्ताः । 'एकैकस्य तु वर्णस्य विन्यासो यः पुनःपुनः । अर्थगत्या तु संख्यातमनुप्रासं पुरातनैः । अत्यर्थं तत्कृतं राजन् ग्राम्यतामुपगच्छति । समानशब्दं भिन्नार्थं यमकं कीर्तितं पुनः ॥ आदौ मध्ये तथैवान्ते पादस्य तु तदिष्यते । संदृष्टकसमुद्राख्यौ तथैव यमकौ मतौ ॥ समस्तपादयमकं पुष्करं परिकीर्तितम् । उपमानेन तुल्यत्वमुपमेयस्य रूपकम् ॥ रूपकाभ्यधिकं नाम तदेवैवं गुणाधिकम् । गुणानां व्यतिरेकेण व्यतिरेकमुदाहृतम् ॥ उपमानविरुद्धैश्च गुणैस्तदपरं मतम् । द्वित्र्यर्थवाचकैः शब्दैः श्लेष इत्यभिधीयते ॥ अन्यरूपस्य चार्थस्य कल्पना याऽन्यथा भवेत् । उत्प्रेक्षाख्यमलंकारं कथितं तत्पुरातनैः ॥ उपन्यासस्तथाऽन्यः स्यात्प्रस्तुताद्यत् क्वचिद् भवेत् । ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यदि॥ उपन्यासेन चान्यस्य यदन्यः परिकीर्त्यते । उपन्यासमलंकारं तन्नरेन्द्र प्रकीर्तितम् ॥ हेतुं विना विततता प्रोक्ता सा तु विभावना । प्रोक्तान्यातिशयोक्तिस्तु अतुलैरुपमागुणैः ॥ यथास्वरूपकथनं वार्तेति परिकीर्तितम् । भूयसामुपदिष्टानां निर्देशं क्रमशस्तथा ॥ यथासंख्यमिति प्रोक्तमलंकारं पुरातनैः । विशेषप्रथनादुक्ता विशेषोक्तिस्तथा नृप ॥ या क्रिया चान्यफलदा विरोधस्तु स इष्यते । स्तुतिरूपेण या निन्दा निन्दास्तुतिरिहोच्यते ॥ निन्दास्तुतिस्तथैवोक्ता निन्दारूपेण या स्तुतिः । वस्तुनस्तूपमानेन दर्शनं तन्निदर्शनम् ॥ बिम्बात्तथास्यादुपमा तु यत्र तेनैव तस्यैव भवेन्नृवीर । अनन्वयाख्यं कथितं पुराणैरेतावदुक्तं तत्र लेशमात्रम् ॥' इति ॥ १२५ ॥

SGDF
Sri Gargeshwari Digital Foundation

महादेवः स० । चतुर्थः सैकोयम्० ॥ १२६ ॥

॥ इति चन्द्रालोके पञ्चमो मयूखः ॥

SRI CHAMARAJ... BANGALORE ... VEDA MAHA PATHA...

## षष्ठो मयूखः ।

अथ रसाः ।

आलम्बनोद्दीपनात्मा विभावः कारणं द्विधा ।
कार्योऽनुभावो भावश्च सहायो व्यभिचार्यपि ॥ १ ॥

---

महादेव इति पूर्ववत् । विशेषमाह—चतुर्थ इति । एकेन सहितः सैकश्चतुर्थः पञ्चम इत्यर्थः ॥ १२६ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां पञ्चमो विलासः ।

अल्पोदरभरणविधौ निर्दयमपरं प्रयासि किं शरणम् ।
अपि हृदय सदयहृदयं स्मर वरवरदमिन्दिरारमणम् ॥ १ ॥

रीतिनिरूपणस्य रसनिरूपणोपजीवकतयोद्देशक्रमेण लक्षणनिरूपणानन्तरं प्राप्तमपि तन्निरूपणं करिष्यमाणः ततः प्रागवसरसंगत्या रसान्निरूपयितुं प्रतिजानीते शिष्यावधानाय—अथ रसा इति । अभिधीयन्त इति शेषः । विभावानुभावव्यभिचारिभावैराहितोत्कर्षस्य स्थायिभावस्य रसत्वात्तदुपोद्घातत्वेन तदनुगुणतयाऽऽदौ विभावादीनभिधत्ते—आलम्बेत्यादि । कारणं विभावः स द्विधा आलम्बनोद्दीपनभेदात् । तत्राद्यः कान्तः कान्ता च । उद्यानादिरन्त्यः । अयं भावः । रसमात्रे आलम्बनविभाव उद्दीपनविभावश्च कारणम् । यमालम्ब्य रसप्रवृत्तिः स आद्यः, तमुद्दीपयति यः सोऽन्त्यः । यद्यप्युद्दीपकस्य न जनकत्वं तथाप्युद्दीपनं विनाऽऽस्वादायोगाद्रसत्वानुपपत्तेरुत्कर्षाधायकत्वेन जनकता विवक्षितेति । कार्यम् अनुभावः । कार्ये पुंस्त्वं तु छन्दोऽनुरोधात् तद्रूपविशेष्यानुरोधेन । स च शृङ्गारे भ्रूविक्षेपस्मितादिः । सहायः सहकारी स भावः स एव व्यभिचारिपदेनाप्युच्यते इत्यर्थः । एतेषां व्यभिचारिणां भावत्वव्यवहारस्तु प्रकाशादौ व्यभिचारिभाव इति स्पष्टः । एते च प्रतिरसं भिन्ना वक्ष्यन्ते ॥ १ ॥

SGDF
Sri Gargeshwari Digital Foundation

गलद्वेद्यान्तरोद्भेदं हृदयेष्वजडात्मनाम् ॥
मिलन्मलयजालेप इवाह्लादं विकासयन् ॥ २ ॥
काव्ये नाट्ये च कार्ये च विभावाद्यैर्विभावितः ॥
आस्वाद्यमानैकतनुः स्थायीभावो रसः स्मृतः ॥ ३ ॥

---

अथ श्लोकद्वयेन रसस्वरूपमाह—गलदित्यादि । रसादिः स्थायीभाव एव रसः । ननु तस्य सूक्ष्मरूपस्य सत्त्वात्सदा तद्व्यवहारापत्तिरत आह—विभावीति । विभावितो अभिव्यक्तः रसो न सूक्ष्मावस्थापन्नः । अभिव्यक्तिहेतुमाह—विभावाद्यैरिति । अभिव्यक्तिस्थलमाह—काव्य इति । नाट्ये चेति चेन नाटकग्रहणम् । कार्यपदेन चित्रग्रहणं द्वितीयचः सर्वसमुच्चायकः । कार्यपदेन नृत्यादिगृह्यत इति व्याख्यानं तु पुनरुक्तिग्रस्तम् । तथा च काव्यनाटकश्रवणेन नाट्यचित्रप्रेक्षणेन विभावादिधीद्वारा रसप्रतीतेः काव्यनाटकनाट्यचित्रस्थत्वं बोध्यं तस्य । नन्वभिव्यक्तिनाशदशायामपि रसव्यवहारापत्तिरभिव्यक्तत्वस्य पूर्वं सत्त्वादत आह—आस्वाद्येति । आस्वाद्यमानमेव तस्य स्वरूपं न त्वास्वादितमास्वादनीयं वेति यावदानन्दस्तावदेव रसत्वम् । तथा च आस्वादनस्वरूपो ज्ञानस्वरूपः तथा च विभावितोऽभिव्यक्त इत्यत्र मतिबुद्धीति वर्तमाने क्त इति बोध्यम् । नन्वेवं दुःखात्मककरुणादौ प्रवृत्तिर्न स्यादत आह—आह्लादमिति । तत्राप्यद्भुतविभावादिप्रेक्षणेन सुखाभिव्यक्तिरेव भवतीत्यर्थः । ज्ञानमप्यनन्यविषयमिति गलद्वेद्यान्तरोद्भेदमिति क्रियाविशेषणेनोक्तम् । अन्यत्तत्र न भासत एवेति तदर्थः । एतेन विभावादिनाऽन्याभिव्यक्तौ भासमानस्य रसत्वे तत्र दैववशादन्यस्यापि भाने तस्यापि रसत्वापत्तिरित्यपास्तम् । केषां हृदयाह्लादोऽत आह—अजेति । अजडात्मनां तत्तद्रसपरिशीलनाभ्यासपाटववताम् । अत एव न शास्त्राभ्यासे शृङ्गाराभिव्यक्तिरित्यादि । हृदयेषु जडात्मनामिति पाठे तु जडहृदयेषु मलयजालेपो यथा आह्लादं विकासयतीति दृष्टान्ते योज्यम् । अयमाशयः । शृङ्गारादीनां नवानां रसानां रत्यादयो नव क्रमेण स्थायिभावाः तिष्ठन्तीति स्थायिनः स्थिरास्ते च ते भावाश्चेत्यर्थः । यतः सर्वो जीवः सुखसक्तो रिरंसते स्वहितायोत्सहते स्वेष्टक्षतिशङ्कया शोचते हसति वैचित्र्यदर्शनाद्विस्मयते बिभेति परस्मै कुप्यति परं जुगुप्सते वैराग्येण किंचित्त्यक्तुकामः प्रशमं

SGDF
Sri Gargeshwari Digital Foundation

भजते। नहि मुक्तावस्थातः पूर्वमेभिर्नवभिश्चित्तव्यापारैः शून्यः कदाचित्कश्चिदपि संसारेऽवतिष्ठते। एवं च वासनारूपतया स्थितान्विरुद्धैरविरुद्धैर्वा भावैरतिरस्कृतप्रवाहान् रत्यादीन् विभावयन्ति आस्वादयोग्यान् जनयन्ति ते विभावाः। ये अनुभावयन्ति तत्रैवोत्कर्षाधानं कुर्वन्ति ते अनुभावाः। ये विशेषेण अभितः सर्वतः स्थायिनं शरीरे चारयन्ति संचारयन्ति ते व्यभिचारिभावाः। तथा चाभिव्यज्यमानः स्थायीभाव एव रस इति संप्रदायः। उक्तं च भरतेन–विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति। अत्र भट्टलोल्लटादयः–स्थायिनां विभावेनोत्पाद्योत्पादकभावरूपादनुभावेन गम्यगमकभावरूपाद्व्यभिचारिणा पोष्यपोषकभावरूपात्संगात्संबन्धाद्रसस्य निष्पत्तिरुत्पत्तिरभिव्यक्तिः पुष्टिश्चेत्यर्थः। तथा हि ललनाद्यालम्बनैः स्थायी जनितः, उद्यानाद्युद्दीपनैरुद्दीपितः, कटाक्षाद्यनुभावैः प्रतीतियोग्यः कृतो व्यभिचार्युत्कण्ठादिभिः पोषितो रामादावनुकार्ये रसः साक्षात्संबन्धेन तुल्यरूपतानुसंधानवशात्स एव नटे काव्यपाठे चारोप्यमाणः सामाजिकानां चमत्कारहेतुरित्याहुः। तथा चानुकार्ये एव त्रिधोक्तरीत्या रसनिष्पत्तिर्नटादौ त्वारोपः सामाजिकेषु नैव स इति फलितम्। इदमयुक्तम्। सामाजिकनिष्ठरत्युद्बोधाभावे तेषां चमत्कारानापत्तेः, तज्ज्ञानस्य तथात्वे लौकिकशृङ्गारादिदर्शनेनापि तत्प्रसङ्गात्। अत एव श्रीशङ्कुकः–तस्य तैरनुमाप्यानुमापकभावरूपसंबन्धाद्रसस्य निष्पत्तिरनुमितिरिति तदर्थः। तथा च तैर्नटादावनुमीयमानोऽनुकार्यो रत्यादिभावो रस इति फलितम्। तैस्तस्यानुमितिरूपा चमत्कारजनकप्रतीतिर्या सामाजिकानां जायते सा रस इति यावत्। तदयं प्रयोगः चित्रतुरगवद्रामोऽयमिति ज्ञातो नटः पक्षः सीताविषयकरतिमान् तद्विषयककटाक्षादिमत्त्वादिति। यद्यपि ते कृत्रिमाः नटादौ च स नास्ति तथापि तत्त्वेनाज्ञानात् तैः स्थायित्वेन संभाव्यमानत्वेनाभावनिश्चयाभावात्तस्यानुमितिः सैव चमत्कारजनकप्रतीतिरूपा चर्वणा। सा सामाजिकानामिति तेष्वेव रस इति व्यवहारः। अत एव नटादौ न स इत्याह। इदमप्ययुक्तम्। प्रत्यक्षज्ञानमेव सचमत्कारं नानुमित्यात्मकमिति लोकप्रसिद्धिविरोधापत्तेः उक्तदोषाच्च संजातबाधज्ञानकसामाजिकरसोद्बोधानापत्तेश्च। अत एव भट्टनायकः–रामे नटादौ च नोत्पाद्यते न वाऽनुमीयते उक्तदोषात्। नापि सामाजिके उत्पद्यते



SGDF
Sri Gargeshwari Digital Foundation

अभिव्यज्यते चासंनिहितेभ्यः सीतादिभ्यः सामाजिकरत्यनुत्पादात् आराध्यत्वज्ञानस्य प्रतिबन्धकत्वाच्च, सिद्धस्यैव व्यङ्ग्यत्वाच्च रसस्य चासिद्धत्वात्, अन्यथा सर्वेषामेवाभिव्यक्तिप्रसङ्गाच्च । तस्मात्तस्य तैः संयोगाद्भोग्यभोजकभावरूपसंबन्धाद्रसस्य निष्पत्तिर्भुक्तिरिति सूत्रार्थः । नन्वन्यनिष्ठरत्यादेरन्यनिष्ठविभावादिभिरन्यस्य कथं भोगोऽतिप्रसङ्गादिति चेत् शृणु । शब्दात्मनः काव्यस्य प्रायो व्यापाराः अभिधालक्षणान्यतरत्, भावकत्वं, भोजकत्वं च । भावकत्वं च साधारणीकरणम् । तेन हि विभावादयः स्थायितया क्रियन्ते । तच्च तदेव यत्सीतादिविशेषाणां कामिनीत्वादिसामान्येनोपस्थितिः स्थाय्यनुभावादीनां च संबन्धिविशेषानवच्छिन्नत्वेन । अन्त्यव्यापारद्वयं नाट्येऽपि । एवं च तेन तथाकृतैस्तैर्मुहुर्मुहुश्चिन्त्यमानस्तेन तथाकृतो भावनोपनीतरामादिरत्यादिस्थायी सामाजिकमनसा घ्राणोपनीतसौरभ इव चक्षुषा तृतीयव्यापारेण भुज्यते साक्षात्कारविषयीक्रियते यथा कामिनीभावनानन्तरं तत्साक्षात्कारः । भोगश्च सत्त्वगुणोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपा अनन्यालम्बनः संवित्तत्स्वरूपो लौकिकसुखानुभवविलक्षणः । उद्रेकश्च स्वेतरावभिभूयावस्थानम् । तथा च तैर्भाव्यमानोपनीतरामादिगतरत्यादिः सामाजिकानां चिदानन्दस्वरूपसाक्षात्कारविषयो रस इति फलितम् । नटस्य कदाचिदास्वादश्चेत्सामाजिकत्वेनैव न तु तत्त्वेनेति बोध्यमिति । इदमप्ययुक्तम् । व्यापारद्वयकल्पने मानाभावात् । भुक्तेर्ज्ञानातिरेकस्य अनुभवबाधितत्वाच्च । अत एवाचार्याभिनवगुप्तपादाः—धूमेन ह्यनुमानाभ्यासवतां नैयायिकानामिव ललनोद्यानकटाक्षरोमाञ्चादिभिः स्थायिरत्याद्यनुमानाभ्यासवासनावासितान्तःकरणानामालङ्कारिकाणां सामाजिकानां पूर्वमुत्पन्नः सूक्ष्मतयाऽन्तःस्थितो रत्यादिः स्थायी काव्यनाट्यादौ विभावादिपदव्यपदेश्यैरेवाभिव्यज्यते । एवं च येषां पूर्वं रत्यादिर्नोत्पन्नस्तेषां नास्त्येव रसाभिव्यक्तिः । अन्यनिष्ठानामपि विभावादीनां संबन्धिविशेषीयत्वेनाप्रतीतौ स्वीयत्वासंसर्गाग्रहात्साधारण्येन प्रतीतौ तेनैव प्रमातृविशेषसंसर्गाग्रहरूपेणाभिव्यज्यते । अभिव्यक्तिरेव चर्वणा । तेन विभावादीनां समूहालम्बनात्मकचर्वणाविशिष्टः स्थायी रसः । न चैवं सुखात्मकस्यात्मनोऽनभिव्यक्तेः कथं रसत्वम् । स्वप्रकाशनये रत्याद्यवच्छिन्नचैतन्यस्य रसत्वादन्तःकरणावच्छिन्नचैतन्यस्य प्रमातृत्वाच्चैतन्यांशमादाय रत्याकारवदभिन्नस्यात्मनो विषयीकरणात् । तद्विशिष्टश्च स विभावादिज्ञानावधिश्चर्व्य-

SGDF
Sri Gargeshwari Digital Foundation

रत्याख्यस्थायिभावात्मा वल्लभादिविभावितः ॥
आलस्येर्ष्याजुगुप्साभ्यो विना संचारिभिर्युतः ॥ ४ ॥
अनुभावैः कटाक्षाद्यैरुन्मादाद्यैर्यथाक्रमम् ।
संभोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः ॥ ५ ॥

---

माणतैकप्राणश्चर्वणानाशे नष्टो रस इति धीविषयः । पुर इव परिस्फुरन्हृदयमिव प्रविशन्सर्वाङ्गीणमिवालिङ्गन्नन्यत्सर्वमिव तिरोदधद्ब्रह्मास्वादमिवानुभावयन्नत एवालौकिकचमत्कारकारी रसः । न च समूहालम्बनात्मकरसप्रतीतौ विभावादीनां पृथग्धीप्रसङ्गो घटपटादिवत् । पानकरसन्यायेन चर्वणात् । तत्र यथा कर्पूराद्यंशो न भेदेन बुध्यते तथाऽत्रापि विभावाद्यंशः । उत्पन्नो रस इति धीरपि चर्वणोत्पत्तिविषया अतोऽभिव्यज्यमान एव रसो नोत्पाद्यमानो नाप्यनुमीयमानो वा-भुज्यमान इत्याहुः । तदेतत्सर्वमभिप्रेत्य मूले विभावित इत्युक्तम् । आस्वाद्यैकेत्यनेन रसशब्दे रस्यत इति योगः सूचितः । विभावाद्यैरित्यनेन मिलितानामेव व्यञ्जकत्वं न प्रत्येकमिति सूचितं तथात्वे व्यभिचारात् । तथा हि व्याघ्रादयो विभावा भयानकस्येव रौद्राद्भुतवीराणाम्, अश्रुपातादयोऽनुभावाः शृङ्गारस्येव करुणभयानकयोः, चिन्तादयो व्यभिचारिणः शृङ्गारस्येव करुणवीरभयानकानाम्, नह्यत्र तथाऽस्ति । यत्र चैकेन तदभिव्यक्तिः यथा—परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कमथपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदपाण्डुः कपोलः । अत्र केवलानुभावः । एवमन्यत्रापि बोध्यम् । तत्रापि तेनान्यस्याप्याक्षेप इति बोध्यम् ॥२॥३॥

पद्यद्वयेन शृङ्गारमाह—रत्याख्य इति । रत्याख्यः स्थायिभाव आत्मा स्वरूपं यस्य स शृङ्गारो मतः । कीदृशः जायापतिप्रभृतिभिर्विभावितः तन्निष्ठस्तद्विषय इति यावत् । आदिनोद्यानादि । तथा च कान्ता कान्तश्चालम्बनविभावः उद्यानादिरुद्दीपनविभावः । पुनः कीदृशः अनुभावैः कटाक्षाद्यैर्युक्तः आद्येन स्वेदादयः । पुनः कीदृशः आलस्यादीनां क्रमेण करुणरौद्रबीभत्सव्यभिचारित्वात्तदन्यैः संचारिभिर्व्यापारिभावैरुन्मादाद्यैर्युतः । आद्येन हर्षादयः एवंयोजनार्थमेव यथाक्रममिति पदम् । अत एव मध्येऽनुभावैः कटाक्षाद्यैरित्युक्त्वोन्मादाद्यैरित्यन्ते उक्तम् । स च शृङ्गा-

SGDF
Sri Gangeshwari Digital Foundation

हासस्थायी रसो हास्यो विभावाद्यैर्यथाक्रमम् ।
वैरूप्यफुल्लगण्डत्वावहित्थाद्यैः समन्वितः ॥ ६ ॥

रो द्विविधः संयोगो विप्रलम्भश्च । तावपि प्रच्छन्नप्रकाशरूपत्वेन द्वेधा । तदुक्तम् । जायापत्योर्मिथो रत्यावृत्तिः शृङ्गार उच्यते । संयोगो विप्रलम्भश्चेत्येष तु द्विविधो मतः । तौ तयोर्भवतोर्वाच्यौ बुधैर्युक्तवियुक्तयोः। प्रच्छन्नश्च पुनरेष द्विधा मत इति द्विविधस्यापि संयोगस्य स्वेदाश्रुरोमाञ्चादयोऽनुभावाः आलस्यादिभिन्नाः हर्षादयो व्यभिचारिणः द्विविधस्यापि असंतोषकृशतादीनवचनतादयोऽनुभावाः । शङ्कामदग्लान्यादयो व्यभिचारिणः । पूर्वानुरागमानात्मप्रवासकरुणात्मकः । विप्रलम्भश्चतुर्थः स्यात्पूर्वपूर्वो ह्ययं गुरुः ॥ अयमेवाभिलाषविरहेर्ष्याप्रवासशापहेतुक इति गीयते । अथ तेषामुदाहरणानि—गुरुसविधे राधाया माधववदनाभिलाषिणी नयने । पञ्जरचङ्क्रममाणं खञ्जनमिथुनं तिरस्कुरुतः॥ सहस्रैर्गोपीनां पदनतिपराणां परिहृतो वरं वृन्दारण्ये घनरसरसालापदरसे । समालिङ्गन् चुम्बन् मुहुरपि कटाक्षैः परिमृशन् तथा गायन्नृत्यन् रसयति रहस्यं यदुपतिः ॥ समानकुलशीलयोः समरुचोः परायत्तयोः परस्परविलोकनाकुलितचेतसोः प्रेयसोः । तनुत्वमधिविन्दतोर्बहुविधं विधिं निन्दतोरशक्यविनिवेदना विरहवेदना वर्धते ॥ अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालि मृणालैरिति वदति दिवाऽनिशं बाला ॥ नायिकानायकभेदेन संयोगविप्रयोगभेदास्त्वन्यतो बोध्याः ॥ ४ ॥ ५ ॥

पद्येन हास्यमाह—हासेति । हासः स्थायी यस्येति बहुव्रीहिः ईदृशो रसो हास्यः । वैरूप्यादयो ये यथाक्रमं विभावाद्यास्तैर्युक्त इत्यर्थः । शृङ्गारीयालम्बनविभावस्यैवात्र सत्त्वात्तदनुक्तिः । क्वचित्कौरूप्येति पाठः । आद्येनानुभावादिपरिग्रहः । अन्त्याद्यस्य प्रत्येकं संबन्धः तेनान्यसर्वपरिग्रहः । तथा च आलम्बनविभावो नायको नायिका च । उद्दीपनविभावो वैरूप्यादिः । अनुभावः फुल्लगण्डत्वादिः । व्यभिचारी अवहित्थादिरित्यर्थः । तदुक्तम् 'हासमूलः समाख्यातो हास्यनामा रसो बुधैः ॥ चेष्टाङ्गवेषवैकृत्याद्वाह्ये हास्यरसोद्भवः । कपोलाक्षिकृतोल्लासोऽभिन्नोष्ठः स महात्मनाम् । विदीर्णास्यश्च मध्यानामधमानां सशब्दकः ॥' उत्तममध्यमाधमभेदेन हास्यरसस्त्रिधेत्यर्थः । परं तु हास्य-

SGDF Sri Gargeshwari Digital Foundation

अभीष्टविप्रयोगाश्रुपातग्लान्यादिभिः क्रमात् ।
विभावाद्यैर्युतः शोकस्थायी स्यात् करुणो रसः ॥ ७ ॥
क्रोधस्थायी रसो रौद्रो विभावाद्यैः समन्वितः ।
मात्सर्यहस्तनिष्पेषसंमोहाद्यैर्यथाक्रमम् ॥ ८ ॥

---

रसः संक्रमणरूपो यतः परस्य हास्यं दृष्ट्वा विभावादीन्पश्यन्नन्योऽपि हसति । यथाऽम्लदाडिमरसास्वादान्पश्यन्स्वमुखे लालां करोति तद्वत् । न त्वन्यरसानां संक्रमणरूपत्वम् । न च स्वामिशोकेन भृत्यशोकात्तस्यापि संक्रमणरूपत्वमिति वाच्यम् । भृत्यशोकस्य स्वामिशोकनिमित्तककरुणरसान्तरत्वात् । यथा 'गताः केचित्प्रबोधाय स्वपन्तं कुम्भकर्णकम् । तदधःपवनोत्सङ्गादुड्डीय पतिताः क्वचित् ॥' रसोदाहरणं यथा 'कृष्णः किं कुरुते गतः स मथुरामित्याकलय्योद्धवादन्तर्हासतया क्षणार्धमपि न स्थातुं क्षमा यौवनात् । विस्फूर्जत्करतालिकापटुरवं प्रोत्फुल्लगण्डस्थलं निःशङ्कं कथयन्ति गोपसुदृशः कुब्जारतिः श्रीपतेः' ॥ ६ ॥

करुणमाह—अभीष्टेति । अत्राप्यालम्बनविभावो नायिकादिरिति पुनर्नोक्तः । आदिपदस्य प्रत्येकं संबन्धः । तथा च इष्टवियोगोऽनिष्टसंयोगश्चोद्दीपनः अश्रुपातादयोऽनुभावाः ग्लान्यादयो व्यभिचारिणः । अनेन क्रमेण ये विभावादयः तैर्युक्तः शोकः स्थायी यस्येति विग्रहः । शोच्यतेऽनेनेति शोकः । तदुक्तम् 'शोकोत्थः करुणो ज्ञेयस्तत्र भूपातरोदने । वैवर्ण्यमोहनिर्वेदप्रलापाश्रूणि कीर्तयेत्' । यथा—'सीतामपास्य त्रपया नतास्यं समागतं लक्ष्मणमानिरीक्ष्य । बभूव बाष्पाम्बुभिमध्यलीनो दृगन्तमीनो रघुनन्दनस्य' ॥ ७ ॥

रौद्रमाह—क्रोधेति । क्रोधः स्थायी यस्येति विग्रहः । यथाक्रमं विभावाद्यैर्मात्सर्यादिभिः समन्वित इत्यर्थः । आलम्बनविभावः प्राग्वत् । आद्यशब्दस्य प्रत्येकं संबन्धः । तथा च मात्सर्यादिरुद्दीपनविभावः । मात्सर्यं च दारापहाराज्ज्ञातिविघातादौ पराभवाद्भवतीति तज्जनितो द्वेषः । एवं च पराभवादीनामप्युद्दीपकत्वम् । हस्तनिष्पेषादिरनुभावः संमोहादिर्व्यभिचारी यस्य स रौद्ररस इत्यर्थः । तदुक्तम् 'क्रोधात्मको भवेद्रौद्रः क्रोधश्चारिपराभवात् । भीष्मवृत्तिर्भवेदुग्रः सामर्षस्तत्र नायकः ॥ स्वांसाघातस्वशस्त्रो-

SGDF
Sri Gargeshwari Digital Foundation

उत्साहाख्यस्थायिभावः प्रभावादिविभावभूः ।
वीरोऽनुभावैः स्थैर्याद्यैर्भावैर्गर्वादिभिर्युतः ॥ ९ ॥
व्याघ्रादिभिर्विभावैस्तु वेपिताद्यनुभावभृत् ।
भावैर्मोहादिभिर्युक्तो भयस्थायी भयानकः ॥ १० ॥

---

पक्षेपभ्रुकुटयस्तथा । अत्रारातिजनाक्षेपोद्दलनं वोपवर्ण्यते ॥ ' यथा ' केयं माता पिशाची क इव च जनको भ्रातरः केत्र कीटा वध्योऽयं बन्धुवर्गः कुटिलविटसुहृच्चेष्टिता ज्ञातयोऽमी । आगर्भं यावदेषां कुलमिदमखिलं नैव निःशेषयामि स्फूर्जन्तः क्रोधवह्नेर्न दधति विरतिं तावदेते स्फुलिङ्गाः ' ॥८॥

वीरमाह्—उत्साहेति । उत्साहाख्यः स्थायी भावो यस्येति विग्रहः । ईदृशोऽसौ वीररस इत्यर्थः । नायकोऽत्रालम्बनविभावः प्राग्वत् । प्रभावादिविभावभूः आदिना बलादयः । तथा च प्रभावबलमदधाष्टर्यादिरुद्दीपनविभावः स्थैर्यादिरनुभावः । आद्यपदात् धैर्याक्षेपवचनादयः भावैरित्यस्य व्यभिचारिभावैरित्यर्थः । तथा च गर्वादिर्व्यभिचारी, आदिना ' अमर्शः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः । क्रोधासूये च संमोह आवेगः शोकहर्षणम् ॥ गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ॥ ' इति बोध्यम् । यथा संग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं सुग्रीवेण विचिन्तितं हनुमता व्यालोलमालोकितम् । श्रीरामेण परंतु पीनपुलकस्फूर्जत्कपोलश्रिया सान्द्रानन्दरसालसा निदधिरे बाणासने दृष्टयः ॥ ' अन्यत्र तु एतद्भेदाः दानवीरादयोऽप्युक्तास्ते तत एव बोध्याः । तदुक्तम् ' उत्साहात्मा भवेद्वीरस्त्रेधा धर्माजिदानतः । नायकोऽत्र भवेत्सर्वैः श्लाघ्यैरधिगतो गुणैः इति ' ॥ ९ ॥

भयानकमाह्—व्याघ्रेति । भयः स्थायी यस्येति विग्रहः । आलम्बनविभावः प्राग्वत् । विभावैस्त्वित्यस्यापि युक्त इत्यत्रान्वयः । वेपिताद्यनुभावं बिभर्ति धारयति इत्यर्थः । भावैरिति प्राग्वत् । तथा च व्याघ्रादिरुद्दीपनविभावः कम्पितादिरनुभावः मोहादिर्व्यभिचारी यस्य स भयानकरस इति बोध्यम् । तदुक्तम् ' भयानको भवेद्भीतिः प्रकृतिर्घोरवस्तुनः । स च प्रायेण वनितानीचबालेषु शस्यते ॥ दिगालोकास्यशोषाङ्गकम्पगद्गदसंभ्रमाः । श्वासवैवर्ण्यसंमोहा वर्ण्यन्ते विबुधैरिह ॥ ' यथा ' कालियरूढे शालिनि वनमालिनि हा हतं विगायन्त्यः । व्यालीभिः करतालीहतवक्षोभिश्चकम्पिरे भूयः ॥ ' यथ-

SGDF Sri Gargeshwari Digital Foundation

स्थायी जुगुप्सा बीभत्सो विभावाद्यैर्यथाक्रमम् ।
अनिष्टेक्षणनिष्ठीवमोहाद्याः संमताः क्रमात् ॥ ११ ॥
अद्भुतो विस्मयस्थायी मायादिकविभावभूः ।
रोमाञ्चाद्यनुभावोऽयं स्तम्भादिर्व्यभिचारिकः ॥ १२ ॥
निर्वेदस्थायिकः शान्तः सत्सङ्गादिविभावभूः ।
क्षमादिकानुभावोऽयं स्तम्भादिर्व्यभिचारिकः ॥ १३ ॥

---

वा—'स्फूर्जद्भुजाविंशतिकं समन्तात्समुल्लसद्भीषणवक्त्रपङ्क्तिम् । दृष्ट्वैव रौद्रं दशवक्त्रदेहं सीताऽतिभीता बत मूर्च्छिताऽऽसीत् ॥ १० ॥

बीभत्सरसमाह—स्थायीति । पृथक्पदं भावेऽजहल्लिङ्गं 'यस्य सः' इति शेषः । यस्य जुगुप्सा स्थायी भावः स बीभत्सः । विभावाद्यैर्यथाक्रमं युत इति शेषः । तानेवाह—अनिष्टेक्षेति । आद्यः प्राग्वत् । तदुक्तम् ' बीभत्सः स्याज्जुगुप्सातः सौहृद्याश्रवणेक्षणात् । निष्ठीवनास्यभङ्गादिः स्यादत्र महतां च न ' उत्तमानां व्यभिचार्यनुभावा नेत्यर्थः । यथा—' अन्त्रैः कल्पितमङ्गलप्रतिसराः स्त्रीहस्तरक्तोत्पलव्यग्रोत्तंसभृतः पिनह्य सहसा हृत्पुण्डरीकस्रजः । तत्तच्छोणितपङ्ककुङ्कुमजुषः संभूय कान्तैः पिबन्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः पिशाचाङ्गनाः ' ॥ ११ ॥

अद्भुतं लक्षयति—अद्भुत इति । विस्मयः स्थायी यस्येति विग्रहः । आलम्बनः प्राग्वत् । मायादिरूपोद्दीपनविभावप्रभावः रोमाञ्चादिरनुभावो यस्य स्तम्भादिर्व्यभिचारी यस्येदृशोऽयमद्भुतो रसः । तथा च मायादिरुद्दीपनविभावः रोमाञ्चादिरनुभावः स्तम्भादिर्व्यभिचारिभावः । य इति पाठे स इति शेषः । एवमग्रेऽपि । तदुक्तम् ' विस्मयात्माद्भुतो ज्ञेयः स चासंभाव्यवस्तुनः । दर्शनाच्छ्रवणाद्वापि प्राणिनामुपजायते । तत्र नेत्रविकासः स्यात्पुलकः स्वेद एव च ' यथा ' दिव्यहरेर्मुखकुहरे विस्तीर्णे पर्णति व्योम । चूर्णति चन्द्रः क्रमुकति कनकगिरिः खदिरसारति दिनेशः ' ॥ १२ ॥

शान्तं लक्षयति—निर्वेदेति । निर्वेदः स्थायी यस्येति विग्रहः । आलम्बनः प्राग्वत् । सत्सङ्गादिविभावजन्यः क्षमादिकोऽनुभावो यस्य स्तम्भादिर्व्यभिचारी यस्येदृशोऽयं शान्तो रसः । निर्वेदश्च स्वावमानः ।

SGDF
Sri Gurgeshwari Digital Foundation

रतिर्देवादिविषया सन्ति चव्यभिचारिणः ।
वेद्यमाना निगद्यन्ते भावाः साहित्यवेदिभिः ॥ १४ ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १५ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ १६ ॥
सुप्तं प्रबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ १७ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदिमे भावाः समाख्यातास्तु नामतः ॥ १८ ॥

---

तथा च सत्सङ्गादिभिरुद्दीपनविभावैः क्षमादिभिरनुभावैः स्तम्भादिव्यभिचारिभिर्व्यक्तो निर्वेदः शान्तरस इत्यर्थः । तदुक्तं 'सम्यग्ज्ञानसमुत्थानः शान्तो निस्पृहनायकः । गर्वेर्ष्यादिपरित्यागात्सम्यग्ज्ञानस्य चोद्भवः ॥' इति । यथा 'अशीमहि वयं भिक्षामाशावासो वसीमहि । शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः' ॥ १३ ॥

भावांल्लक्षयति—रतिरिति । देवादिविषयिणी रतिर्भावः । आदिना नृपगुरुमुनिसुतविषयाऽपि । यथाऽनुपदं वक्ष्यमाणाः निर्वेदादयो व्यभिचारिभावाः सन्ति ते यदा वेद्यमानाः काव्यव्यङ्ग्या भवन्ति तदा साहित्यवेदिभिर्भावा इति निगद्यन्ते तेऽपि भावपदवाच्या भवन्तीत्यर्थः ॥ १४ ॥

तानेव निर्वेदादीनाह—निर्वेदेति । स्वापमानो निर्वेदः, कार्याक्षमत्वं ग्लानिः, अनिष्टचिन्तनं शङ्का, असहिष्णुता असूया, मदः प्रसिद्धः, रतादिजनितः खेदः श्रमः, इष्टानादरः आलस्यं, शरीरमालिन्यकारको मनोविकारो दैन्यम् , चिन्ता ध्यानं, मोहो ज्ञानाजननं, धैर्यं धृतिः, संस्कारजन्यं ज्ञानं स्मृतिः ॥ १५ ॥

व्रीडादयः प्रसिद्धाः । अपस्मारो रोगविशेषः ॥ १६ ॥

सुप्तादयः प्रसिद्धाः । अवहित्थमाकारगोपनम् । मरणं तत्प्रागवस्था न तु प्रसिद्धं तस्यामङ्गलरूपत्वात् ॥ १७ ॥

अग्रे प्रसिद्धाः ॥ १८ ॥

SGDF
Sri Gargeshwari Digital Foundation

**सर्वसाधारणप्रेमप्रश्रयादिस्वरूपया ।**
**अनौचित्या रसाभासा भावाभासाश्च कीर्तिताः ॥ १९ ॥**
**भावस्य शान्तिरुदयः सन्धिः शबलता तथा ।**
**काव्यस्य काञ्चनस्येव कुङ्कुमं कान्तिसंपदे ॥ २० ॥**

---

रसभावाभासानाह—सर्वेति । एकस्या नायिकाया अनेकनायकविषयावलोकनादिवर्णनयाऽनेकविषयप्रेमादिकथनमनौचिती तया रसोऽपि रसाभासो भवति एवमेकस्यानेकदेवतादिविषयकनत्यादिवर्णनयाऽनेकविषयरत्यादिकथने भावाभास इत्यर्थः । प्रश्रयो नम्रता नतिरिति यावत् । यथासंख्यमन्वयः ॥ १९ ॥

पामराणां (?) भावशान्त्यादीनाह—भावेति । भावस्य व्यभिचारिभावादेः शान्तिर्नाशः उदय आधिक्यम् । भावद्वयस्य क्रमेण कथनं सन्धिः । बहूनां कथनं शबलता, एतान्यपि काव्यस्य कान्तिसंपदे कान्तिर्दीप्तरसत्वं तत्संपदे भवन्ति काञ्चनस्य कुङ्कुमं केसरमिवेत्यर्थः । तद्वत् शोभाजनकानीत्याशयः । अत्र पर्यायप्रवृत्तौ सन्धिरपर्यायप्रवृत्तौ शबलतेति केचित् ॥ अथ भावादिक्रमेणोदाहरणानि । तत्रादौ देवविषया यथा—'मातर्भवानि मम पूर्वभवानि यानि पापानि तानि तव दर्शनतो गतानि । एतावदेव मम देवि परं तु भूयाच्चित्तं मुरारिचरणे स्थिरतामुपेयात् ॥' नृपविषया यथा—'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभाराभिया हरः ॥' गुरुविषया यथा—'पुरुषायुषजीविन्यो निरातङ्का निरीतयः । यन्मदीयाः प्रजास्तत्र हेतुस्त्वद्ब्रह्मवर्चसम् ॥' मुनिविषया यथा—'विलोकनेनैव तवामुना मुने कृतः कृतार्थोऽस्मि निबर्हितांहसा । तथापि शुश्रूषुरहं गरीयसीर्गिरोऽथ वा श्रेयसि केन तृप्यते ॥' सुतविषया यथा—'एह्येहि वत्स रघुनन्दन रामचन्द्र चुम्बामि मूर्धनि चिराय परिष्वजे त्वाम् ॥' व्यभिचारी यथा—'जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता ततः । नो तावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥' अत्र विधिं प्रत्यसूया व्यङ्ग्या । रसाभासो यथा—स्तुमः कं वामाक्षि क्षणमपि विना यं न रमसे विलेभे कः प्राणान् रणमखमुखे यं मृगयसे । सुलग्ने को जातः शशिमुखि यमालिङ्गसि बलात्तपःश्रीः कस्यैषा मदननगरि ध्यायसि तु यम् ॥ अत्र तुशब्देन व्यवच्छे-

SGDF
Sri Gargeshwari Digital Foundation

आतुर्यमासप्तमं च यथेष्टैरष्टमादिभिः।
समासः स्यात्पदैर्न स्यात्समासः सर्वथापि च ॥ २१ ॥

---

दार्थेन व्यापारस्यानेकविषयत्वलाभाद्बहुषु व्यापारोपादानेन बहुविषया रतिर्व्यज्यते । भावाभासो यथा—'एका सुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमास्या ॥ तत्किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इवाभ्युपायः ॥' अत्र रतेर्व्यभिचारिभूता चिन्ता अनौचित्यप्रवर्तिता । नायिकाया अननुरक्तत्वेन रतेरनुत्कृष्टत्वेन तद्व्यभिचारिणोऽपि तथात्वात् । भावशान्तिर्यथा—'तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ॥ इत्युक्ते क तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया साश्लिष्टा रभसेन तत्सुखवशात्तन्व्यापि तद्विस्मृतम् ॥' अथ कोपशान्तावेव चमत्कारविश्रमः । उदयो यथा—'एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया सद्यो मानपरिग्रहग्लपितया चाटूनि कुर्वन्नपि । आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणान्माभूत्सुप्त इवेत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥' अत्रौत्सुक्यस्योदयः । संधिर्यथा—'विलम्ब्य कस्यांचिदुपागतोऽयमतः परावर्तितदृष्टिसृष्टिः । प्रवर्तिताक्षी स्मितवक्त्रलक्ष्मी राधा हरौ लोकगुरौ बभूव ॥' अत्र कोपौत्सुक्ययोः सन्धिः । शबलता यथा—'नद्यः कुत्र पराः क दैवतसरिद् द्रक्ष्यामि भूयोऽपि तां तद्ध्यानाद् बहुसंपदो जलतया दृष्टापि हर्षप्रदा । स्थास्ये तद्विरहातुरः कियदहं जातैव सा दुर्लभा चेतः स्वास्थ्यमुपैहि केन वपुषा सा दृक्पथं यास्यति ॥' अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता । द्वयोः समावेशे सन्धिर्बहूनां तस्मिन्नयमितिमते इदमुदाहरणम् । पूर्वपूर्वोपमर्देनोत्तरोत्तरप्रवृत्तौ तथात्वमिति प्रकाशादिमते तु 'काकार्यं शशलक्ष्मणः क च कुलं भूयोऽपि दृश्येत सा दोषाणामुपशान्तये श्रुतमहो कोपेऽपि कान्तं मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा चेतः स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति ॥' इत्युदाहरणम् । तत्र वितर्कौत्सुक्यमतिस्मृतिशङ्कादैन्यधृतिचिन्तानां स्फुटमेव पूर्वपूर्वोपमर्देन प्रतीतिः । भावस्थितिस्तु भावमध्ये एवान्तर्भूतेऽति पृथङ्नोक्ता । विष्णुधर्मोत्तरे रसादयः मार्कण्डेयेन वज्रं राजानमुक्तास्ततो बोध्याः ॥ २० ॥

अथ रीतीराह—आतुर्यमिति । आङवधौ क्रियाविशेषणे चैते । तथा

SGDF
Sri Gargeshwari Digital Foundation

पाश्चालिकी च लाटीया गौडीया च यथारसम् ।
वैदर्भी च यथासंख्यं चतस्रो रीतयः स्मृताः ॥ २२ ॥
मधुरायां समाक्रान्ता वर्गस्थाः पञ्चमैर्निजैः ।
लकारश्च लसंयुक्तो ह्रस्वव्यवहितौ रणौ ॥ २३ ॥

---

चाचतुर्थमासप्तमं यथास्यात्तथा पदैः समासः स्यात् । यथेष्टैरष्टमादिभिश्च समासः स्यात् सर्वथापि च समासो न स्यात् ॥ २१ ॥—

एताः क्रमेण पाञ्चाल्यादिनामिका रीतयश्चतस्र ऋषिभिः स्मृता इत्यक्षरार्थः । तथा च द्वित्रिचतुष्पदानां समासे पाञ्चाली, पञ्चषट्सप्तपदानां समासे लाटीया, अष्टमादियथेष्टपदसमासे गौडीया, सर्वथा समासाभावे वैदर्भीति फलितम् । यथारसमिति तमनतिक्रम्येत्यर्थः । तथा च यस्मिन् रसे या रीतिरनुकूला सा तत्र कार्या । यथा शृङ्गारे वैदर्भी रौद्रवीरयोर्गौडीया अन्यत्र पाञ्चालीलाटीये इत्यर्थः । एवं चासां रसानुगुणत्वेन रसाङ्गतोक्तेः शब्दालङ्काराणां वर्णधर्मत्वेन तद्वैलक्षण्यं लभ्यते । उदाहरणान्युच्यन्ते क्रमेण—'मदननृपतियात्राकालविज्ञापनाय स्फुरति जलधिमध्ये ताम्रपात्रीव भानुः । अयमपि पुरुहूतप्रेयसीमूर्ध्नि पूर्णः कलश इव सुधांशुः साधुरुल्लालसीति ॥' इयं पाञ्चालिकी । 'अस्ताद्रिबिम्बरविबिम्बतयोदयाद्रिचूडोन्मिषत्सजलचन्द्रतया च सायम् । सन्ध्याप्रवृत्ततरुहस्तगृहीतकांस्यतालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥ इयं लाटीया । 'एतद्दत्तासिघातस्रवदसृगसु‥‥भ्रंशसार्द्रैन्धनैतद्दोरुद्दामप्रतापज्वलनदलमिलद्धूममालाधमाय । एतद्दिग्जैत्रयात्रासमसमरपरं पश्यतः कस्य नासीदेतन्नासीरवाजिव्रजखुररजरजोराजिराजिस्थलीषु ॥' इयं गौडीया । 'निविशते यदि शूकशिखा पदे सृजति सा कियतीमिव न व्यथाम् ॥ मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः ॥' इयं वैदर्भी ॥ २२ ॥

अथ मधुराप्रौढापरुषाललिताभद्राख्याः पञ्च वृत्तीः क्रमेण लक्षयति—मधुरेति । चतुर्भिर्यत्र काव्ये कवर्गादिस्थिता वर्णा निजैः पञ्चमैर्ङकाराद्यैः समाक्रान्ता युक्ताः लकारेण संयुक्तो लकारश्च ह्रस्वाक्षरव्यवहितौ रेफणकारौ स्तः सा मधुरा वृत्तिरित्यर्थः ॥ २३ ॥

SGDF
Sri Gargeshwari Digital Foundation

रेफाक्रान्ता वर्ग्ययणाष्टवर्गात्पञ्चमादृते ।
कपाक्रान्तस्तवर्गः स्यात्प्रौढायां च कमूर्धता ॥ २४ ॥
सर्वैरूर्ध्वैः सकारस्य सर्वै रेफस्य सर्वथा ।
रहोर्द्वेधा तु संयोगः परुषायां शषौ स्वतः ॥ २५ ॥
लकारोऽन्यैरसंयुक्तो लघवो घमधा रसौ ।
ललितायां तथा शेषा भद्रायामितिवृत्तयः ॥ २६ ॥
अङ्गभङ्गोल्लसल्लीला तरुणी स्मरतोरणम् ।
तर्ककर्कशपूर्णोक्तिप्राप्तोत्कटधियां वृथा ॥ २७ ॥

---

रेफेति । टवर्गं पञ्चमाक्षराणि च वर्जयित्वा णस्योपादानात्तद्भिन्नत्वमुभयत्र बोध्यं, तथा च यत्र काव्ये अन्यानि वर्गाक्षराणि यकारणकारौ च रेफाक्रान्ताः तवर्गश्च ककारपकाराभ्यामाक्रान्तः तकारश्च ककारोर्ध्वमुच्चार्यते सा प्रौढेत्यर्थः । ककारस्य मूर्धनि तकारो यस्यामिति विग्रहः । तः कमूर्धज इति पाठस्तु सुगमः । अर्थः स एव ॥ २४ ॥

सर्वैरति । सकारस्य सर्वैः ककारादिभिरुर्ध्वैः संयोगः रेफस्य च तैः सर्वथोपर्यधोभावेन संयोगः रेफहकारयोर्मिथो द्वेधा उपर्यधोभावेन संयोगः शकारषकारौ च स्वतः स्वतन्त्रौ वर्णान्तरासंयुक्तौ सा परुषा वृत्तिरित्यर्थः । अत्र संयोगो व्यवहितसाधारणः ॥ २५ ॥

लकार इति । यत्र लभिन्नैर्लकाराऽसंयुक्तैः घकारमकारधकाररेफसकारा लघव उच्चार्यन्ते सा ललिता । अत्रान्यैरिति कथनाल्लकारस्य लकारेण संयोगेऽपि न दोषः । लघुत्वं चात्रासंयुक्तत्वम् । तेनोदाहरणे सधयोर्गुरुसहितत्वेपि न क्षतिः । तथा शेषा इति । शेषा उक्तवृत्तिष्वनुपयुक्ताः षकारादयोऽन्यैः संयुक्ता असंयुक्ता वा यत्रोच्चार्यन्ते सा भद्रेत्यर्थः । एवं चाक्षरविशेषविन्यासनिबन्धना वृत्तय इति भावः ॥ २६ ॥

एतासां वृत्तीनां क्रमेणोदाहरणान्यर्धत्रयेण पादाभ्या चाह—अङ्गेत्यादि । तर्केण कर्कशाः पूर्णाश्च व्याप्तास्तत्पूर्णा वा या उक्तयस्ताभिः प्राप्ता उत्कटा धीयैस्तेषां प्रायोत्कटेति पाठे तत्प्राया तत्प्रचुरा उत्कटेत्याद्यर्थः । तर्कचातुर्येति पाठस्तु युक्तः । स्मरसंबन्धितोरणरूपा अङ्गसंबन्धिभङ्गेनोल्लसन्ती लीला यस्यास्तादृशी तरुणी वृथेत्यन्वयः । तर्ककर्कशबुद्धीनां कामतोरणरूपा तरुणी वृथा न सुखाय । सा हि साहित्यपरिशीलनसरसा-

SGDF Sri Gargeshwari Digital Foundation

**वीप्सोत्सर्पन्मुखाग्रार्द्रं बर्ही जह्रे कृशस्तृषम् ।**
**ललना रभसं धत्ते घनाटोपे महीयसि ॥ २८ ॥**

**महादेवः० ॥ ऋतुसंख्यः० ॥ २९ ॥**

॥ इति चन्द्रालोके षष्ठो मयूखः ॥

---

नामेव सुखदेति भावः । अत्र पूर्वार्धेऽङ्काराधःस्थौ गकारौ लकारसंयुक्तौ लकारौ रेफणकारयोश्च लघ्वक्षरान्तरितत्वमिति मधुरात्वम् । उत्तरार्धे ककारयकारणकारा रेफाक्रान्ताः । तकारः ककारपकाराभ्यामाक्रान्तः । त्क इत्यत्र ककारस्य मूर्धनि तकार इति प्रौढात्वम् । काव्यप्रकाशे तु उपनागरिका परुषा कोमलेति वृत्तित्रयमभिधायैतासामेव वैदर्भीगौडीया पाञ्चालीति संज्ञात्रयं वामनादिभिरुक्तं यतो वृत्तीनां रीतीनां च न भेद इत्युक्तम् । इदमेव सूचयितुमत्र ग्रन्थकृता रीतिनिरूपणानन्तरं तद्वृत्तिनिरूपणमारब्धम् । अत्र तु रीतीनां समासव्यङ्ग्यत्वं वृत्तीनां तु वर्णानुपूर्वीव्यङ्ग्यत्वमित्यभिप्रेत्य भेद उक्त इति बोध्यम् ॥ २७ ॥

वीप्सोत्सर्पदिति । घनाना मेघानामाटोपे आगमे विस्तारे वा कृशो बर्ही मयूरो वीप्सया वारंवारमुत्सर्पद्यन्मुखाग्रं तदार्द्रं यथा स्यात्तथा तृषं जह्रे अत्यजत् । ललना तु रभसं मुदं धत्ते दधातीत्यर्थः । अत्र पूर्वार्धे सकारोर्ध्वपकारतकारौ पकारगकारदकाराश्च रेफस्योपर्यधःस्थायिनः । रकारहकारौ च मिथ उपर्यधोभावापन्नौ । शकारषकारौ च स्वतन्त्राविति परुषात्वम् । तृतीयपादे सप्त्यक्षरे लकारोऽन्यैरसंयुक्तः रेफभकारसकारधकारघकाराश्च लघवः असंयुक्ता इति ललितात्वम् । यद्यपि धस्य संयुक्तत्वं तथापि परसवर्णविकल्पेनानुस्वारस्याचूत्वेन तत्त्वं बोध्यम् । तुर्यपादे व्यक्षरन्यूने सर्वेषामसंयुक्तत्वाद्भद्रात्वम् । तथा च तोरणमित्यन्ते मधुरा, वृथेत्यन्ते प्रौढा, तृषमित्यन्ते परुषा, घनेत्यन्ते ललिता, शेषे भद्रेति फलितम् ॥ २८ ॥

महादेव इति प्राग्वत् । ऋतुसंख्यः षट्संख्य इति विशेषः ।

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां षष्ठो विलासः ।

---



SGDF
Sri Gargeshwari Digital Foundation

## सप्तमो मयूखः ।

वृत्तिभेदैस्त्रिभिर्युक्ता स्रोतोभिरिव जाह्नवी ।
भारती भाति गम्भीरा कुटिला सरला क्वचित् ॥ १ ॥
सांमुख्यं विदधानायाः स्फुटमर्थान्तरे गिरः ॥
कटाक्ष इव लीलाक्ष्या व्यापारो व्यञ्जनात्मकः ॥ २ ॥

---

छन्दःप्रसिद्धमधुरादिवृत्तीर्निरूप्य व्यञ्जनादिवृत्तीर्निरूपयति—वृत्तीति । व्यञ्जनालक्षणाशक्तिरूपैस्त्रिभिर्वृत्तिविशेषैर्युक्ता भारती क्रमेण कचित् स्थलविशेषे गम्भीरादिसंज्ञां लभत इत्यर्थः । गङ्गायास्त्रिपथगामित्वं प्रसिद्धमेव । तथा च व्यञ्जनावृत्त्या गम्भीरा, लक्षणया कुटिला, शक्त्या सरलेति फलितम् । शक्यलक्ष्यान्यतरप्रतीत्युत्तरप्रतीतिजनकत्वं गम्भीरात्वम् । शक्यार्थस्य त्यागेनात्यागेन वा अर्थान्तरप्रतीतिजनकत्वं कुटिलात्वम् । अविलम्बेनार्थप्रत्यायकत्वं सरलात्वम् । स्रोतःसु अगाधत्ववक्रत्वसरलत्वानि प्रसिद्धानि ॥ १ ॥

निरूपितरसस्य व्यञ्जनैकगम्यतया व्युत्क्रमेण निर्देशक्रमेणादौ व्यञ्जनां निरूपयति—सांमुख्यमिति । स्फुटमर्थान्तरे शक्यलक्ष्यार्थभिन्नेऽर्थे सांमुख्यं प्रतीतिः, विषयत्वं सप्तम्यर्थः । विदधानाया गिरः तद्विषयप्रतीतिं कुर्वतः शब्दस्य यो व्यापारः शक्यादिभिन्नः सा व्यञ्जना । पुंसि सांमुख्यमभिलाषं कुर्वन्त्या लोलाक्ष्याः कटाक्षो यथेत्यर्थः । कटाक्षसाम्येन संमुखावलोकनादिव कटाक्षस्य शक्त्यादितो व्यञ्जनायाः सौभाग्यमुक्तम् । अर्थान्तरे इत्यावृत्त्या योज्यमिति कश्चित् । तथा च मुख्यार्थबाधग्रहनिरपेक्षबोधजनको मुख्यार्थसंबद्धासंबद्धसाधारणप्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जनेति फलितम् । वक्त्रादिवैशिष्ट्यादिज्ञानं च व्यङ्ग्यविशेषबोधे सहकारीति न सर्वत्र तदपेक्षा । अयं भावः गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिप्रतीतिर्निर्विवादा । सा च वृत्त्यन्तरेण प्रमाणान्तरेण चासंभाविनी व्यञ्जनां वृत्तिं तस्यैव शब्दस्य कल्पयति । तथा हि । न तावत्तत्र शक्तिः सङ्केताग्रहात् । गङ्गायास्तीरमित्यादावपि तत्प्रतीत्यापत्तेश्च । गङ्गा पावनीत्यादावन्यतरवैयर्थ्यापत्तेश्च । नापि लक्षणा अनुपपत्तिद्वयरूपतद्बीजाभावात् ।

SGDF
Sri Gargeshwari Digital Foundation

तटादेर्मुख्यत्वाभावेन तद्बाधाद्यभावाच्च । नहि तटं गङ्गापदस्य मुख्योऽर्थः, न वा गङ्गानिष्ठशैत्यपावनत्वादि तीरसंबन्धि, न वा शैत्यादिप्रतीतिः प्रयोजनवतीति किमपि लक्षणाबीजमस्ति । प्रयोजनान्तरकल्पनायां शैत्यादिप्रतीतेः प्रयोजनत्वं न स्यात् । नन्वस्तु शैत्यादिविशिष्टतीरे लक्षणा तद्विशिष्टतीरप्रतीतेर्लक्षणाफलत्वमितिचेन्न, तद्विशिष्टतीरत्वस्य पूर्वमज्ञातत्वेन लक्ष्यतावच्छेदकत्वानुपपत्तेः । न चान्यत्रावगतस्य तद्वैशिष्ट्यस्य तत्त्वमस्त्विति वाच्यम् । तद्विशेषप्रतीत्यनापत्तेः शैत्यादिप्रतीतेः फलत्वानुपपत्तेश्च । नापि प्रमाणान्तरं संनिकर्षव्याप्तिस्मृत्यादेरनपेक्षणात् । अतस्तत्र व्यञ्जनैव वृत्त्यन्तरमिति । अन्यान्यपि गमकानि आकरे स्पष्टानीति नेह तन्यन्ते । सा चेयं व्यञ्जना त्रिविधा —शक्तिमूला लक्षणामूला व्यञ्जनामूला च । तत्राद्या—अनेकार्थशब्दयुतवाक्यात्प्रकरणादिसहकारेणैकवाक्यार्थबोधे जातेऽर्थान्तरबोधस्य प्रकरणादिनियन्त्रितशक्त्याऽसंभवान्मुख्यार्थबाधाद्यभावेन लक्षणाया अप्यसंभवात्तयैवोपपत्तेरावश्यकी सा । यथा—' भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥' अत्र प्रकरणेन भद्रात्मन इत्यादिपदानां राज्ञि तदन्वययोग्ये चार्थे अभिधाया नियन्त्रणेऽपि गजस्य तदन्वययोग्यस्य चार्थस्य व्यञ्जनयैव प्रतीतिः । न चायं श्लेषो न व्यञ्जना, यस्येति सर्वनाम्ना प्रकरणापेक्षाध्रौव्येण अभिधानियमनात्तन्नियमनाभावे एव च श्लेषाङ्गीकारात् । द्वितीया यथा—'मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥' अत्र विकासादीनां पुष्पादिधर्मत्वेन स्मितादावनुपपत्तेर्विकसितवशितसमुच्छलितापास्तसंस्थामुकुलितोद्धुरंमोदते इति शब्दैः क्रमेण प्रसृतत्वायत्तत्वोल्लसितत्वानेकविषयसंचारित्वोद्भिन्नत्वयोग्यत्वानियन्त्रितत्वलक्षणया रमणीयतातिशययुक्तानुरागित्वसकलवशीकारित्वानुरागातिशयालिङ्गनयोग्यत्वरमणीयत्वस्पृहणीयत्वानि काव्यवासनापरिपक्वबुद्धिभिः सहृदयैः प्रतीयन्ते । तृतीया यथा—उअ णिच्चलणिप्पन्दा बिसिणीपत्तम्मि रेहइ बलाआ । णिम्मलमरगअभाअणपरिट्ठिआ सङ्खसुत्तिव ॥ अत्र निष्पन्दत्वेनाश्वस्तत्वं तेन जनागमनाभावोऽतो न त्वमत्रागत इति मिथ्या वदसीति, कथं-

SGDF
Sri Gargeshwari Digital Foundation

अविवक्षितवाच्यस्य द्वौ भेदौ वाच्यमेव चेत् ।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।। ३ ।।

चिद्दत्तसंकेता त्वं नागता अहं त्वागत इति वादिनं प्रति व्यज्यते । तत्र मध्यमा द्विविधा—गूढव्यङ्ग्याऽगूढव्यङ्ग्या च । आद्या मुखं विकसितेत्यादौ यथा तथा काव्येत्यादिना उक्तम् । द्वितीया यथा—'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् । उपदिशति कामिनीनां यौवनमद एव ललितानि ॥' अत्र वाक्यप्रयोक्तृत्वरूपोपदेशकत्वस्य मदेऽसंभवादाविष्कारलक्षणयाऽनायासेन शिक्षादानं व्यज्यते । तच्च सहृदयासहृदयवेद्यत्वादगूढम् । किं च गूढागूढव्यङ्ग्यानां क्वचिद् व्यङ्ग्यतावच्छेदकभानाभानाभ्यामपि द्वैविध्यं बोध्यम् । वस्त्वलङ्कारभावादिव्यङ्ग्येषु तद्भानं रसव्यङ्ग्येषु तदभानमिति । नहि व्यङ्ग्ये रसादौ शृङ्गारत्वादिभानं, विगलितवेद्यान्तररूपत्वभङ्गापत्तेः । अत एव भावानामिव न रसानां सन्धिशबलते इति दिक् ॥ २ ॥

एवं व्यञ्जनां निरूप्य तत्प्रयोजनभूतध्वनिभेदानां दशभिः प्रतिपादनव्याजेनादौ लक्षणामूलव्यञ्जनां निरूपयंस्तस्याः पद्येनादौ भेदौ कथयन् ध्वनिविशेषस्य भेदावाह—अविवेति । ध्वनिर्द्वेधा अविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्च । तत्राद्यस्याविवक्षितं वाच्यं यस्मिन् तस्य लक्षणामूलव्यञ्जकस्य द्वौ भेदौ, चेद् यदि वाच्यमेवार्थान्तरे संक्रमितं यद्वा अत्यन्तं तिरस्कृतम् । तथा चार्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति तद्द्वैविध्येन सा द्विधेत्यर्थः । तत्रार्थान्तरसंक्रमितत्वं लक्ष्यार्थपरिणतत्वम् । यथा—'त्वामस्मि वच्मि विदुषां समवायोऽत्र विद्यते । आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ' अत्रास्मीत्यहमर्थे । अत्र वच्मीति स्वकर्तृककथनस्य स्वमुखाद्वचननिःसरणादेव सिद्धेरनुपयुक्तं सत् सामान्यविशेषभावसंबन्धेनोपदिशामीत्यर्थे लक्षणया लक्ष्ये परिणतम् । एवं त्वामित्यादावपि बोध्यम् । स्वस्याप्तत्वं चेह व्यङ्ग्यम् । द्वितीयं यथा—'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् । विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥' इति । अत्रोपकृतमित्याद्यपकारिणि बाधितं सत् विरोधसंबन्धेनापकृतादिलक्षकम् । स्वस्य साधुत्वं व्यङ्ग्यम् । एवं चाजहल्लक्षणामूलव्यङ्ग्यमाद्यं जहल्लक्षणामूलव्यङ्ग्यं द्वितीयमिति फलितम् । तथा च लक्षणामूलव्यञ्जनाद्वैविध्ये तद्ध्वनिर्द्विधेति तात्पर्यम् ॥ ३ ॥

SGDF
Sri Gurgeshwari Digital Foundation

द्वौ विवक्षितवाच्यस्य लक्ष्यालक्ष्यक्रमात्मकौ।
चत्वारिंशद्युतैकेन भेदाः षट् चानयोः क्रमात् ॥ ४ ॥
त्रिधा शब्दार्थतद्युग्मशक्तिजन्मा स्फुटक्रमात्।
रसभावतदाभासप्रमुखस्त्वस्फुटक्रमात् ॥ ५ ॥
वस्त्वलङ्कारयोर्व्यक्तेर्भेदौ द्वौ शब्दशक्तिजौ।
अर्थशक्तिसमुत्थस्य भेदा द्वादश तद्यथा ॥ ६ ॥

---

अथ विवक्षितान्यपरवाच्यस्य ध्वनेर्भेदद्वयकथनव्याजेन शक्तिमूलां व्यञ्जनां तावद् द्विधाऽऽह—द्वाविति । विवक्षितः अन्यपरोऽन्यतात्पर्यको वाच्यार्थो यस्मिन् तस्य शक्तिमूलव्यङ्ग्यकस्य सतो व्यञ्जकस्य लक्ष्यव्यङ्ग्यक्रमोऽलक्ष्यव्यङ्ग्यक्रमश्चेति द्वौ भेदावित्यर्थः । लक्ष्यं ज्ञायमानं व्यङ्ग्यं, क्रमेण शब्दार्थशक्तिज्ञानक्रमेण यस्मिन्निति विग्रहः । व्यङ्ग्यव्यञ्जकभेदेनैतदुभयध्वनिभेदानाह—चत्वारिंशदिति । अनयोर्लक्ष्यव्यङ्ग्यक्रमालक्ष्यव्यङ्ग्यक्रमयोः क्रमादेकेन युताः चत्वारिंशत् षट् च भेदा भवन्तीत्यर्थः । तद्यथा वक्ष्यमाणरीत्या शब्दशक्तेर्द्वौ भेदौ अर्थशक्तेर्द्वादश । एवं मिलित्वा चतुर्दश । तेषां पदवाक्यनिष्ठतया द्वैगुण्येनाष्टाविंशतिः । अर्थशक्तेः प्रबन्धनिष्ठा द्वादश । उभयशक्तेरेकः । एवं लक्ष्यव्यङ्ग्यक्रमस्यैकचत्वारिंशद्भेदाः । अलक्ष्यव्यङ्ग्यक्रमस्य तु पदादिभेदेन षट् । एवं मिलित्वोभयोः सप्तचत्वारिंशद्भेदा इति ॥ ४ ॥

एवमुक्तसप्तचत्वारिंशद्भेदान् प्रपञ्चयति—त्रिधेत्यादि । स्फुटक्रमात् लक्ष्यव्यङ्ग्यक्रमात् । हेतौ पञ्चमी एवमग्रेऽपि । शब्दशक्तिजन्मा अर्थशक्तिजन्मा उभयशक्तिजन्मा चेति त्रिधा भेदा भवन्तीत्यर्थः । यत्र शब्दः परिवृत्त्यसहः स आद्यः, यत्र तत्सहः स द्वितीयः, यत्र कश्चित्तत्सहः कश्चिन्न सोऽन्त्यः । अस्फुटक्रमादलक्ष्यव्यङ्ग्यक्रमाद्रसादिव्यङ्ग्यक एक एव भेदो भवतीत्यर्थः । उभयत्र प्रथमान्तपाठस्तु सुगम एव । प्रमुखशब्देन भावशान्त्यादिः । यद्यपि विभावादिभिरभिव्यक्तो रस इति कार्यकारणयोर्भेदादस्ति क्रमस्तथापि स न लक्ष्यते कालसंनिकर्षादिति भावः ॥ ५ ॥

तत्रादौ शब्दशक्त्युद्भवस्य भेदद्वयमाह—वस्त्विति अर्धेन । वस्तुनोऽलङ्कारस्य च व्यक्तेर्व्यञ्जनादित्यर्थः । तथा च वस्तुव्यङ्ग्यः अलङ्कारव्य-

SGDF
Sri Gargeshwari Digital Foundation

चत्वारो वस्त्वलङ्कारमलङ्कारस्तु वस्तु यत् ।
अलङ्कारमलङ्कारो वस्तु वस्तु व्यनक्ति तत् ॥ ७ ॥
वक्तुः कविनिबद्धस्य कवेर्वा प्रौढिनिर्मितः ।
स्वसिद्धो वा व्यञ्जकोऽर्थश्चत्वारस्त्रिगुणास्ततः ॥ ८ ॥
शब्दार्थोभयभूरेकः स च वाक्यैकसंश्रयः ।
पदैकदेशे रचनावर्णवाक्यपदेष्वपि ॥ ९ ॥
प्रबन्धे चेति षोढाऽसौ रसाद्याख्योऽस्फुटक्रमः ।
एषु सप्तदशस्वेकं परित्यज्यास्फुटक्रमम् ॥ १० ॥

ङ्ग्यश्चेति द्वौ भेदौ शब्दशक्तिजस्येति भावः । अर्थशक्त्युद्भवस्य द्वादश भेदानाहार्थेति सार्धद्वाभ्याम् । तद्यथेति तदेवोच्यते इत्यर्थः ॥ ६ ॥

तदेवाह—चत्वार इति । यत् यस्मात् । अत्र क्रमेण यथासंभवं कर्तृकर्मपदानि । तत् तस्मात् । तथा चालङ्कारव्यञ्जकं वस्तु, वस्तुव्यञ्जकोऽलङ्कारः, अलङ्कारव्यञ्जकोऽलङ्कारः, वस्तुव्यञ्जकं वस्तु, इत्येवं चत्वारो भेदा इति भावः ॥ ७ ॥

एतेषां चतुर्णां त्रैविध्यमाह—वक्तुरिति । यतः कविनिबद्धस्य वक्तुः प्रौढ्या निर्मितोऽर्थो व्यञ्जकः, कवेस्तादृशोऽर्थो वा व्यञ्जकः, स्वसिद्धो वार्थो व्यञ्जकस्तत एते पूर्वोक्ता भेदाः चत्वारस्त्रिगुणाः प्रत्येकं त्रिधेत्यर्थः । तथा च कविकल्पितवक्तृप्रौढोक्तिनिष्पन्नाश्चत्वारः कविप्रौढोक्तिनिष्पन्नाश्चत्वारः स्वसिद्धाश्चत्वार इति फलितम् । स्वसिद्धत्वं च स्वतः संभवित्वं कवितत्कल्पितवक्रन्यतरप्रौढोक्तिं विना घटमानत्वमिति यावत् । अत्र वस्तुपदेनालङ्कारभिन्नं ग्राह्यम् ॥ ८ ॥

एक उभयशक्तिज इत्याहार्धेन—शब्देति । चो ह्यर्थे । हि यतः स वाक्यनिष्ठ एवात उभयशक्त्युत्थ एक एवेत्यर्थः । कस्यचित्परिवृत्त्यादेरसंभवादिति भावः । एकस्यास्फुटक्रमस्य प्रागुक्तस्याश्रयभेदेन षड् भेदानाह—पदैकेति । पदैकदेशः प्रकृतिप्रत्ययादिरूपः, रचना आनुपूर्वी, वर्णाः शृङ्गारादौ मधुरादयः, उपग्रहोत्तमपुरुषादय इत्यन्ये ॥ ९ ॥

प्रबन्धो वाक्यसमूहः । असौ रसाद्याख्यो रसादिराख्यायतेऽभिव्यज्यते यत्र सः रसादिव्यङ्ग्यकः अलक्ष्यव्यङ्ग्यक्रमः षोढेत्यर्थः । तदन्योक्तानामधिकभेदानाह—एष्विति । द्वौ लक्षणामूलौ, शक्तिमूलेषु द्वौ शब्द-

SGDF
Sri Gargeshwari Digital Foundation

ये षोडशाद्या द्विगुणास्ते स्युर्वाक्यपदाश्रयात् ।
प्रबन्धेऽपि द्वादश स्युरर्थशक्तिभुवो भिदः ॥ ११ ॥
द्वात्रिंशद् द्वादशैकः षट् सर्वसङ्कलितध्वनेः ।
भेदाः स्युरेकपञ्चाशत् संभिन्नास्तु सहस्रशः ॥ १२ ॥
वक्तृस्यूतं बोधयितुं व्यङ्ग्यं वक्तुरभीप्सितम् ॥
स्वाङ्कुरितमतद्रूपं स्वयमुल्लसितं गिरः ॥ १३ ॥

---

शक्तिजौ, द्वादशार्थशक्तिजाः एवं षोडश । उभयशक्तिजस्य पदानिष्ठत्वादग्रहणम् । एषु उक्तेषु अलक्ष्यव्यङ्ग्यक्रमं गृहीत्वा सप्तदशसु एकमलक्ष्यव्यङ्ग्यक्रमं परित्यज्य मुक्त्वा ये आद्याः षोडश भेदास्ते वाक्यपदरूपाश्रयभेदाद्द्विगुणाः द्वात्रिंशत्स्युरित्यर्थः । अर्थशक्तिजस्यान्यानपि द्वादश भेदानाह—प्रबन्धेऽपीति । भिद् इति भावक्विबन्तं भेदा इत्यर्थः ॥ १० ॥ ११ ॥

सर्वसंकलनेन ध्वनिभेदान् गणयन्नुपसंहरति—द्वात्रिंशदिति । पूर्वोक्ताः सप्तदशस्वेतदन्तर्गतषोडशानां द्वैविध्ये द्वात्रिंशत् । अर्थशक्तिजस्य प्रबन्धे द्वादश । पूर्वोक्त एक उभयशक्तिजः अस्फुटक्रमस्तस्य पदाद्याश्रयभेदेन षट् एते सर्वे संकलिताः संभिन्ना एकपञ्चाशद्भेदाः स्युः । सङ्करसंसृष्टिभ्यां संभेदे तु बाहुल्यमित्याह—संभीति । त्रिविधसंकरेण संसृष्ट्या च सहस्रशः संभेदा वेदखाब्धिवियच्चन्द्रा १०४०४ भवन्ति । एतेषामुदाहरणानि अन्यतो बोध्यानि ॥ १२ ॥

पुनर्व्यङ्ग्यस्य विभागान्तरमाह—वक्तृस्यूतमिति । वक्तुर्बोधयितुमभीप्सितं यद्व्यङ्ग्यं तत् वक्तृस्यूतम् । अतद्रूपं वक्तुरभिप्रायाविषयभूतं गिरः शब्दात्स्वयमेव स्वाभाव्यादेव वक्तृतात्पर्यं विनोच्छ्वसितं प्रतीयमानं तत्स्वाङ्कुरितमित्यर्थः । अङ्कुरवदङ्कुरोऽपि । अयं भावः । पूर्वोक्तं व्यङ्ग्यं द्विधा वक्तृस्यूतं स्वाङ्कुरितं च । वक्तृतात्पर्यविषयभूतमाद्यं, यत्तु शब्दादेव सहृदयैः प्रतीयते तदन्त्यम् । आद्यं गङ्गायां घोष इत्यादौ शैत्यादि, अन्यथाऽवाचकशब्दानुपपत्तिः । द्वितीयमस्तं गतः सवितेत्यादौ, अत्राभिसरणमुपक्रम्यतां प्राप्तप्रायस्ते प्रेयान्, कर्मकरणान्निवर्तामहे, सान्ध्यो विधिरुपक्रम्यतां, दूरं मा गाः, गावो गृहे प्रवेश्यन्तां, सन्तापोऽधुना न भवति, विक्रेयवस्तूनि संह्रियन्ताम्, नागतोऽद्य प्रेयानित्यादीनि जायन्ते

SGDF
Sri Gargeshwari Digital Foundation

**कश्चित् साधारणः कश्चिदामन्त्र्य प्रतिबोधितः ।**
**कश्चित्तटस्थः कश्चिच्च बोधितप्रतिबोधितः ॥ १४ ॥**

---

अतात्पर्यभूताः स्वशब्दानभिधेया बोद्धव्यादिविशेषेण प्रतीतिपथमवतरन्तो व्यङ्ग्या एवेति ॥ १३ ॥

तत्र बोद्धव्यचातुर्विध्येनाद्यं चतुर्विधमिति सार्धश्लोकेनाह—कश्चिदिति । कश्चित्साधारणो बोद्धा इत्येवं क्रमेण बोद्धुश्चातुर्विध्यमित्यर्थः । तत्र साधारणो वक्तृतात्पर्यानभिज्ञः । यथा गतोऽस्तमर्क इत्यादौ वक्तृतात्पर्यानभिज्ञस्यापि बोधः । आमन्त्र्य संबोध्य प्रतिबोधितो द्वितीयः । यथा—'पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ॥ उण्णअपओहरं पेक्खिअ उण जइ वससि ता वससु ॥' अत्र स्वयमित्याद्यर्थैः पदैराच्छाद्य रहस्यमित्थं पान्थं संबोध्य उक्तं तत्र स्वस्तरं कटाद्यास्तरणं नास्ति पाषाणबाहुल्येन तृणदौर्लभ्याद्वृष्टिप्रतिबन्धाद्वासेच्छा चेद्वसेति यथाश्रुते । व्यञ्जनया पाषाणा मूर्खाः सत्थरं कामशास्त्रं मेघम् उन्नतस्तनं च श्लेषेण दृष्ट्वोपभोगक्षमोऽन्यः को नामान्यत्र गन्तुमर्हतीत्याशयः प्रकाशते । प्रयोज्यभिन्नत्वे सति वक्तृतात्पर्यज्ञत्वं तटस्थत्वम् । यथा—'उअ णिच्चलणिप्पन्दा भिसिणीपतम्मि रेहइ वलाआ । णिम्मलमरगअभाअणपरिट्ठिया सङ्खसुतिव्व ॥' अत्र सखीं प्रत्युक्त्या नायिकया तटस्थं प्रति संकेतस्थानं बोधितम् । बोधितेन प्रतिबोधितश्चतुर्थः । यथा—'प्राणेश विज्ञप्तिरियं मदीया तत्रैव नेया दिवसाः कियन्तः । अत्र स्थितिर्युक्तिमती न देशे करा हिमांशोरपि तापयन्ति ॥' अत्र प्रियाबोधितवक्त्रा प्रतिबोधितो नायकः । यद्वा साधारणः अप्रयोज्यत्वे सति प्रतिपाद्यः । यथा—'कुम्भं गृहीत्वा विपुलं सत्वरं समुपागता । श्रमस्वेदनिरासाय विश्राम्यामि सखि क्षणम् ॥' अत्रेदृशजलकुम्भवहनजन्य एवायं श्रमोऽतो नान्यथा शङ्किष्ठा इति सखीं प्रति रतिगोपनम् । तथा च सखी प्रतिपाद्यापि न प्रयोज्या । आमन्त्र्य प्रतिबोधितो नीचः । यथा—'त्वं दूति निरगा कुञ्जं न तु पापीयसो गृहम् । किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥ अत्र दूत्यादिनीचो बोद्धा । तटस्थः समो नियोज्यः । यथा 'गृहोपकरणे सर्वव्यापृतायाः सखे दिनम् । सन्ध्यायां मम विश्रामः क्वचिद्भवति वा न वा ॥' अत्र सङ्केतकालबोद्धा समो नियोज्यः । उत्तमो नियोज्यः तुर्यः

SGDF Sri Gargeshwari Digital Foundation

इत्येवं बोद्धृवैचित्र्याद्वक्तृस्यूतं चतुर्विधम् ।
उपेक्षानिह्नवाभ्यां च द्विधा स्वाङ्कुरितं मतम् ॥ १५ ॥

भूतादिकालभेदेन निह्नवः स्यादनेकधा ।
अनेनापि प्रभेदेन व्यक्तिवल्ली विजृम्भते ॥ १६ ॥

नानाप्रभेदा नियता क्वचित् प्रकरणादिना ।
अर्थेऽर्थमन्यं यं वक्ति तद्वाच्यव्यङ्ग्यमिष्यते ॥ १७ ॥

---

उक्तमेवोदाहरणम् । तथा च वक्तृतात्पर्यविषयभूतं व्यङ्ग्यं बोद्धृभेदेन भिन्नमिति भावः ॥ १४ ॥

इतीति । द्वितीयस्य द्वैविध्यमाह—उपेक्षेति । उपेक्षाविषयभूतं निह्नवविषयभूतं चेत्यर्थः । अगूढं गूढं चेति यावत् । स्पष्टतया सर्वजनवेद्यत्वमगूढत्वम् । यथा ये नाम केचिदिति । अत्र गर्वाविष्कारसर्वसाधारणो व्यङ्ग्यः । गूढत्वं च वाक्यार्थभावनापरिपक्वबुद्धिविभवःमात्रवेद्यत्वम् । यथा मुखं विकसितेति । प्रतिपादितमिदमधस्तात् ॥१५॥

तत्र निह्नवस्यानेकरूपतामाह—भूतादीति । भूतगोपनं भावगोपनं वर्तमानगोपनं चेत्यर्थः । त्रितयमपि यथा । श्वश्रूः क्रुध्यतु निर्दिशन्तु सुहृद इति । तस्माद्वक्तृस्यूतादिभेदेनापि व्यङ्ग्यभेदः संभवतीति सूचयन्लक्षणामूलव्यञ्जनाभेदानुपसंहरति—अनेनेति । अनेनापि लक्ष्यार्थव्यङ्ग्यभेदेनापि व्यक्तिवल्ली लक्षणामूलव्यञ्जनारूपलता विकासते तद्भेदो भवतीत्यर्थः । यथाऽर्थान्तरसंक्रमितवाच्यादिभेदेन भेदस्तथोक्तप्रकारेण व्यङ्ग्यभेदेनापि ध्वनिभेद इति भावः ॥ १६ ॥

अथ शक्तिमूलव्यञ्जनां निरूपयन्वाच्यव्यङ्ग्यमाह—नानेति । नाना प्रभेदा यस्याः सा नानार्था वाक् प्रकरणादिना क्वचिदर्थे नियता नियमिता एकार्थवाचकत्वेन निश्चिता सती यमन्यं द्वितीयमर्थं वक्ति तद्वाच्यव्यङ्ग्यमिष्यते इत्यर्थः । सा चासौ वाच्यव्यङ्ग्यश्चेति समासः । नानार्थेष्वेकस्मादर्थादर्थान्तरोपस्थितिः शक्तिमूलव्यञ्जनयैव शक्तिलक्षणयोरसंभवादिति भावः । यथा—भद्रात्मन इति । अत्र प्रकरणेन पुरुषे अभिधा नियता अतो गजरूपार्थः । न स केवलं वाच्यो व्यङ्ग्यो वापि तु वाच्यः सन् व्यङ्ग्यः, अनियमनदशायां वाच्यो नियमनदशायां व्यङ्ग्य इति भावः । आदिना संयोगादयः ॥ १७ ॥

SGDF
Sri Gargeshwari Digital Foundation

महादेवः० ॥ महति मुनिसङ्ख्यः० ॥ १८ ॥

॥ इति चन्द्रालोकालङ्कारे ध्वनिनिरूपणो नाम सप्तमो मयूखः ॥

## अष्टमो मयूखः ।

**यद्व्यज्यमानं मनसस्तैमित्याय स नो ध्वनिः ।**
**अन्यथा तु गुणीभूतव्यङ्ग्यमापतितं त्रिधा ॥ १ ॥**

---

महादेव इति पूर्ववत् । महति मुनिसङ्ख्य इति विशेषः । सप्तसंख्य इत्यर्थः ॥ १८ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोक-
व्याख्यायां रमाख्यायां सप्तमो विलासः ।

व्यञ्जनावृत्तिनिरूपणादुपस्थितव्यङ्ग्यभेदेन व्यञ्जकध्वनिभेदं निरूप्य तत्प्रसङ्गेन क्रमेण ध्वनिगूणीभूतव्यङ्ग्यद्वयलक्षणकथनपूर्वं मध्यमकाव्यस्य भेदानाह—यदिति । येन काव्येन व्यज्यमानं व्यञ्जनया प्रत्यापितं व्यङ्ग्यं मनसः स्तैमित्याय आर्द्रीभावाय स्तिम आर्द्रीभावे आर्द्रीभावो द्रुतिः इदमुपलक्षणं विस्तारादीनामपि । तथा च तज्जनकं भवति आह्लादजनकमिति यावत् । व्यङ्ग्यप्रतीत्या यत्र मनसोऽत्यन्तमाह्लाद इति परमनिष्कर्षः । स इति विशेषणनिर्देशः तत्काव्यं ध्वनिः उत्तमकाव्यम् । विशेष्याभिप्रायं पुल्लिङ्गम् । यत्र व्यङ्ग्यं वाच्यार्थापेक्षया चमत्कारजनकं स ध्वनिरिति लक्षणम् । अन्यथा तु व्यङ्ग्यस्य ततः चमत्कारजनकत्वाभावे तु गुणीभूतव्यङ्ग्यरूपं मध्यमकाव्यम् । तच्च वक्ष्यमाणभेदैस्त्रिधा त्रिधात्वमापतति प्राप्नोतीत्यर्थः । आद्यस्य तु भेदाः पूर्वमुक्ताः । अयमाशयः । सव्यङ्ग्यमेव काव्यं न तच्छून्यम् । तस्य प्राधान्येन धीरास्तां वस्त्वादिगुणत्वेन वेत्यत्र नाग्रहः । तथा च चमत्कारजनकमपि रसादिव्यङ्ग्यं प्रकरणाद्यनुरोधेनैतद्गुणत्वेन प्रतीयते तत्र मध्यमकाव्यत्वम् । यत्र तु तस्यैव प्राधान्यं तत्रोत्तमकाव्यत्वम् । एतेनाव्यङ्ग्यचित्रादीनामपि काव्यतयोत्तममध्यमाधमभेदेन त्रिविधं काव्यमित्यपास्तं व्यङ्ग्यस्यैव तन्मूलत्वात् । तदुक्तम्—' प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैव व्यवस्थिते । उभे काव्ये तदन्यत्तच्चित्रमित्यभिधीयते '

SGDF Sri Gargeshwari Digital Foundation

व्यक्त एव क्वचिद्व्यङ्ग्यः क्वचिदर्थस्वभावतः ।
क्वचिच्चारुतरस्याग्रे स विमुञ्चति चारुताम् ॥ २ ॥

---

इति । प्रकाशे तु सव्यङ्ग्यमेव काव्यमिति न नियमः । अव्यङ्ग्येऽपि काव्यव्यवहारादत उक्तरीत्या त्रिविधं तदित्युक्तम् । चण्डीदासस्तु उत्तमाधमभेदेन काव्यं द्विधा । प्रकरणाद्यनुरोधेनान्याङ्गत्वेन प्रतीयमानस्यापि रसादेर्व्यङ्ग्यस्य पूर्वमास्वाद्यत्वेन ध्वनित्वस्य बाधायोगादित्याह । तत्राद्यं यथा 'ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥' अत्र वञ्जुललतागृहे दत्तसंकेता तरुणी न गतेति व्यङ्ग्यं तत्तु तत्र गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारकारित्वात् । यतः पश्यन्त्या नितरां मुखच्छाया मलिना भवतीत्यनेन दर्शनकाल एव मालिन्यं तस्यातिशयः संतप्यमानता चेति वाच्यं प्रतीयत इति । द्वितीयं यथा । त्वं दूति निरगा इति । अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येन पापीयस इत्यनेन व्यज्यते । एवं निःशेषच्युतेत्यपि बोध्यम् । अत्राधमपदेन तथा । एवं स्थिताः क्षणमित्यपि । अत्र समाध्यवस्थासनविशेषव्यङ्ग्यस्य प्राधान्येन चमत्कारजनकत्वादिति बोध्यम् । एतेनेदमुदाहरणद्वयं चिन्त्यमित्यपास्तमिति स्पष्टमन्यत्र ॥ १ ॥

तत्र व्यङ्ग्यस्याष्टविधत्वेन मध्यमकाव्यस्याष्टविधत्वस्यागूढमित्यादिना वक्ष्यमाणत्वात्तदुपोद्घाततया अगूढत्वस्य त्रैविध्यमाह । व्यक्तः प्रगटो वाच्य एव व्यङ्ग्यः । वाच्यान्यथानुपपत्तिलभ्यो द्वितीयः । वाच्योऽर्थो व्यङ्ग्यापेक्षया चमत्कारजनकस्तृतीयः । एवमगूढव्यङ्ग्यस्य त्रैविध्यमित्यर्थः । अत्र चमत्कारजनकत्वं रसव्यञ्जकत्वम् । क्वचिद्व्यक्तिरेवेति पाठः । तत्र व्यङ्ग्योऽर्थो व्यक्तिरेव प्रकट एवेत्यर्थः । तेन प्रकटव्यङ्ग्यमेकम् । व्यङ्ग्य इत्यग्रेऽपि संबध्यते । चारुतां न मुञ्चतीत्यस्यापकर्षश्च । अर्थस्वभावत इति समस्तपाठः तेन यत्रार्थस्वभावात् स्वाभाविकादर्थाद् व्यङ्ग्योऽर्थो न चारुरित्यर्थः । तेनाचारुव्यङ्ग्यं द्वितीयम् । चारुतरं वाच्यम् । तृतीयं प्राग्वत् । केचित्तु अत्रैव पाठे चारुतां मुञ्चतीत्यस्य त्रिषु संबन्धः । तथा च क्वचिद्व्यक्तिर्व्यञ्जनैव चारुता मुञ्चतीत्येकः प्रकारः । क्वचिद्व्यङ्ग्योऽर्थः स्वभावत एव चारुतां मुञ्चतीत्यपरः ।

SGDF Sri Gangeshwari Digital Foundation

अगूढं कलयेदर्थान्तरसंक्रामितादिकम् ।
विस्मृतः किमपांनाथ स त्वया कुम्भसंभवः ॥ ३ ॥
अपरस्य रसादेश्चेदङ्गमन्यद्रसादिकम् ।
हा हा ! मत्कुचकाश्मीरलिप्तं भिन्नमुरः शरैः ॥ ४ ॥
तथा वाच्यस्य सिद्ध्यङ्गं नौरर्थो वारिधेर्यथा ।
संश्रित्य तरणिं धीरास्तरन्ति व्याधिवारिधीन् ॥ ५ ॥

---

अत्र पक्षेऽसमस्तपाठः । क्वचिच्चारुरप्यर्थश्चारुतरसंनिधानादचारुरित्यपर इत्याहुः । एतेषामुदाहरणानि श्रीपरीति ग्रामतरुणामिति च ॥ २ ॥

एतदेव सोदाहरणमाह—अगूढमिति । अन्यैरष्टविधं गुणीभूतव्यङ्ग्यं मध्यमकाव्यमुक्तं तन्मतेन सोदाहरणमगूढव्यङ्ग्यमादावाहागूढमितीत्यन्ये । पूर्वोक्तास्तु मूलकृदिष्टभेदा इति तद्भावः । अर्थान्तरसंक्रमितवाच्यमत्यन्ततिरस्कृतवाच्यं च लक्षणायाम् । पदशक्तिमूलसंलक्ष्यक्रमं च व्यङ्ग्यमगूढं स्फुटं कलयेत् ज्ञापयेदित्यर्थः । त्रिविधस्याप्युदाहरणमाह—विस्मृत इति । समुद्रं प्रति कस्यचिदुक्तिः । अत्र कुम्भसंभवपदेनात्यन्ततिरस्कृतवाच्येन समुद्रपातृमुन्यर्थकेन, त्वयेतिपदेनार्थान्तरसंक्रमितवाच्येन तत्सामर्थ्यज्ञात्रर्थकेन, अपांनाथेत्यनेन जडनाथेति शब्दशक्तिमूलानुरणनेन विस्मृत इत्यर्थशक्तिमूलानुरणनेन च स मुनिस्त्वां पास्यति तस्मात्त्वया विभेतव्यमिति व्यङ्ग्यम् । तच्च स्फुटम् ॥ ३ ॥

यत्र रसादिरपररसाद्यङ्गं तद्रूपं द्वितीयमाह—अपरेति । आदिना भावादिग्रहणम् । उदाहरणमाह—हाहेति । रणे पतितं कान्तमवलोक्य कस्याश्चिदुक्तिः । अत्र व्यङ्ग्यशृङ्गारस्य करुणाङ्गत्वम् । एतस्योदाहरणान्तराणि रसवत्प्रेयऊर्जस्विदलङ्कारकथनप्रसङ्गे उक्तानि ॥ ४ ॥

वाच्यसिद्ध्यङ्गमाह—तथेति । वाच्यार्थस्य प्रतीतेरङ्गम् उपपादको व्यङ्ग्योऽर्थो यत्र तदपि तथा वाच्यसिद्ध्यङ्गनामकं मध्यमकाव्यम् । तत्र दृष्टान्तमाह—नौरिति । तथा व्यङ्ग्यो नौरूपोऽर्थो वाच्यस्य वारिधेस्तद्रूपकस्याङ्गमित्यर्थः । तदेव प्रदर्शयन्नुदाहरति—संश्रित्येति । अत्र प्रकरणेन सूर्ये नियतस्तरिसूर्ययोर्वर्तमानोऽपि तरणिशब्दो न नौकावाचकः किंतु व्यञ्जकः स च व्यङ्ग्यो नौकारू-

SGDF Sri Gargeshwari Digital Foundation

अस्फुटं स्तनयोरत्र कोकसादृश्यवन्मतम्।
कुङ्कुमाक्तं स्तनद्वन्द्वं मानसं मम गाहते ॥ ६ ॥
संदिग्धं यदि संदेहो दैर्घ्याद्युत्पलयोरिव।
संप्राप्ते नयने तस्याः श्रवणोत्तंसभूमिकाम् ॥ ७ ॥
तुल्यप्राधान्यमिन्दुत्वमिव वाच्येन साम्यभृत्।
कान्ते त्वदाननरुचा म्लानिमेति सरोरुहम् ॥ ८ ॥

---

पोऽर्थो वाच्यस्य व्याधिवारिधिरूपकस्योपपादकः। इदमेव स्पष्टीकृतं नौरर्थ इति ॥ ५ ॥

अस्फुटव्यङ्ग्यमाह—अस्फुटमिति। अस्फुटत्वं च विलम्बेन प्रतीयमानत्वम्। तदेव स्पष्टयति—स्तनयोरिति। अत्र कुङ्कुमाक्तमिति काव्ये स्तनयोर्मिथः सादृश्यं कोकसादृश्यवन्मतमिष्टमित्यर्थः। कुङ्कुमाक्तत्वेन स्तनयोः कोकसादृश्यरूपं व्यङ्ग्यमस्फुटमित्यर्थः। यथा वा 'रामचन्द्रवदनेन चन्द्रमा निर्जितः किमु कथा सरोरुहाम्। रामपादकमलेन विद्रुमः पल्लवस्य तुलनापि कीदृशी ॥' अत्र क्षीरसमुद्रोत्पन्नजेतुस्तडागोत्पन्नजये कियान्परिश्रम इति चन्द्रपदेन क्षीरसागरजत्वं व्यङ्ग्यमस्फुटम्। एवं विद्रुमपदेन महाद्रुमजत्वम् ॥ ६ ॥

संदिग्धप्राधान्यव्यङ्ग्यमाह—संदिग्धमिति। दैर्घ्यादि चोत्पलं चेति द्वन्द्वः, उत्पलपदेनोत्पलसादृश्यम्। तेन यत्र वाच्यव्यङ्ग्ययोस्तयोरिव प्राधान्ये यदि संदेहस्तदा तत्संदिग्धप्राधान्यव्यञ्जकम्। उदाहरति—समिति। अत्र तस्या नेत्रे तत्पर्यन्तं गते इति वाच्यं, कर्णावतंसीभूतनीलोत्पलसदृशे इति व्यङ्ग्यम्, तयोः किं प्रधानमिति संदेहः। तथा च श्रवणोत्तंसभूमिका गते इत्यनेन दैर्घ्योत्पलसादृश्ययोः कस्य प्राधान्यमिति संदेहवत्संदेह इत्यर्थः ॥ ७ ॥

तुल्यप्राधान्यव्यङ्ग्यं लक्षयति—तुल्येति। यथेन्दुत्वं व्यङ्ग्यं वाच्येन समं तथाऽन्यदपि चेत्तत्तथा, वाच्योऽर्थो व्यङ्ग्येनार्थेन यत्र चमत्कारित्वात्तुल्यप्रधानः तत्तुल्यप्राधान्यव्यङ्ग्यकमित्यर्थः। उदाहरति—कान्त इत्यादि। अत्रोदाहरणे इन्दुत्वं व्यङ्ग्यं चन्द्रमसापि पङ्कजपरा-



SGDF
Sri Gargeshwari Digital Foundation

असुन्दरं यदि व्यङ्ग्यं स्याद्वाच्यादमनोहरम् ॥
सरस्यामीलदम्भोजे चक्रः कान्तां विलोकते ॥ ९ ॥
काकुस्थं प्रणतोऽम्भोधिरद्य माद्यतु रावणः ॥
इत्यष्टधा गुणीभूतव्यङ्ग्यमङ्गीकृतं बुधैः ॥ १० ॥

---

भवद्दर्शनात्तत्पङ्कजपराजयरूपवाच्येन तुल्यम् । तथा च विपरीतमपि संभवतीति तुल्यप्राधान्यमित्यर्थः ॥ ८ ॥

असुन्दरव्यङ्ग्यमाह—असुन्दरमिति । यत्र वाच्यात् व्यङ्ग्यम् अचमत्कारकारि तदसुन्दरव्यङ्ग्यमित्यर्थः । उदाहरणमाह—सरस्यामीति । आमीलन्ति ईषत्संकुचन्ति अम्भोजानि यस्मिन्निति विग्रहः । तादृशे सरसि कोकः कान्तां पश्यतीत्यर्थः । सरस्या अम्भोजे मीलतीति व्याख्या त्वयुक्ता विशेषणवैयर्थ्यापत्तेः । अत्र भावी विरहो व्यङ्ग्यः तदपेक्षया वाच्यनिरीक्षणमेव चमत्कारकारीति भावः ॥ ९ ॥

काकाक्षिप्तव्यङ्ग्यं प्रदर्शयति—काकुस्थामिति । अद्य माद्यतु रावण इति काका मदो गतप्राय इति व्यज्यते । अद्य मदो गमिष्यतीति व्यङ्ग्यं काकैवाक्षिप्तमिति वा । काकुत्स्थवंशाद्रामे समागते तस्य मदस्य नावसर इति व्यङ्ग्यं काकुस्थं काकुनिष्ठम् । यं परिखीकृत्य निःशङ्को लङ्कायां रावणस्तिष्ठति स अम्भोधिः प्रणतः रावणोऽद्य माद्यत्विति वाच्योऽर्थः । कस्यचिदुक्तिः । अद्य तस्य मदोऽनुचित इति व्यङ्ग्यं काकुनिष्ठं माद्यत्विति निन्दार्थकाका प्रकटितमिति कश्चित् । माद्यतीति युक्तः पाठः, अम्भोधौ प्रणतेऽपि माद्यतीति काकुरित्यपि कश्चित् । मम प्रतिभाति—काकाक्षिप्तव्यङ्ग्यमुदाहरणमुखेनैव दर्शयति । काकुत्स्थमिति पाठः । श्रीराममम्भोधिः प्रणत इत्यर्थः । अन्यत्प्राग्वदिति । मध्यमकाव्यभेदानुपसंहरति—इत्यष्टेति । अत्रापि वस्त्वलङ्कारव्यङ्ग्यसंकरसंसृष्ट्यादिभिरुत्तमकाव्यवद्भेदा ज्ञेयाः । तदुक्तम्—'सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सप्रभेदैः स्वैः । संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ' इति । अत्र यदा वस्तुमात्रेणालङ्कारो व्यङ्ग्यस्तदा वस्त्वपेक्षयाऽलङ्कारस्य चमत्काराधायकत्वावश्यंभावान्न गुणीभूतव्यङ्ग्यता, किं तु ध्वनित्वमेवेत्यवधेयम् । मतान्तरे त्वेषां त्रिष्वेवान्तर्भाव इति भावः ॥ १० ॥

SGDF Sri Gargeshwari Digital Foundation

महादेवः० । महति वसुसङ्ख्यः० ॥ ११ ॥

इति चन्द्रालोकालङ्कारे गुणीभूतव्यङ्ग्यनिरूपणो नामाष्टमो मयूखः ॥

SRI CHAMARAJENDRA VEDA MAHA PATA... BANGALORE

## नवमो मयूखः ।

**मुख्यार्थस्याविवक्षायां पूर्वार्वाची च रूढितः ॥**
**प्रयोजनाच्च संबद्धं वदन्ती लक्षणा मता ॥ १ ॥**

---

महादेव इति पूर्ववत् । महति वसुसंख्यः सुखयत्विति विशेषः । अष्टसंख्य इत्यर्थः ॥ ११ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायामष्टमो विलासः ।

---

अथ शब्दवृत्तिव्यञ्जनानिरूपणप्रसङ्गेन स्मृतध्वनिगुणीभूतव्यङ्ग्यभेदान्निरूप्य यत्प्रसक्तो विचारस्तत्समाप्तौ स एव बुद्धिस्थो भवतीति स्मृतशब्दवृत्तिप्रसङ्गेन लक्षणां निरूपयति—मुख्यार्थेति । मुख्यार्थस्याविवक्षाया लक्षणाबीजत्वं वदता मुख्यार्थबाधस्य लक्षणाबीजत्वं निरस्तम् । अर्थान्तरसंक्रमितवाच्येऽन्वयानुपपत्तिरूपमुख्यार्थबाधाभावेऽपि तस्याविवक्षारूपतात्पर्यानुपपत्तिसंभवात् । एवं च वेदे न्यायानुगृहीतेश्वरतात्पर्यानुपपत्तिर्लक्षणाबीजम्, अगत्या तस्या एव कल्पनात् । अत एव न शाब्दबोधमात्रे तात्पर्यज्ञानस्य हेतुता किं तु लाक्षणिकशाब्दबोध एवेति दिक् । संबद्धं वदन्तीति लक्षणास्वरूपम् । उक्तहेतोः शक्यार्थसंबद्धप्रतिपादिका शब्दवृत्तिर्लक्षणेत्यर्थः । सा द्विविधा—पूर्वा अर्वाचीना च । तयोः पूर्वा निरूढलक्षणा प्रयोजनप्रतीत्यनुद्देश्यिका । अर्वाचीना प्रयोजनवती तात्पर्यविषयप्रयोजनप्रतीत्युद्देश्यिकेत्यर्थः । यथा—जातिवाचिनो घटादिपदस्य व्यक्तौ निरूढलक्षणा, कलिङ्गः साहसिको भवतीत्यादौ देशवाचिनः पुरुषे, उभयत्र प्रयोजनाभावात् । गङ्गायां घोष इत्यादौ शैत्यपावनत्वादिप्रतीतिप्रयोजनिका । अत्र घटादिपदात्स्वाश्रयाकाशोपस्थितेस्तत्र लक्षणावारणाय रूढितः प्रयोजनाच्चेत्युक्तम् ॥ १ ॥

SGDF
Sri Gargeshwari Digital Foundation

**लक्षणीयस्वशब्दस्य मीलनामीलनाद्द्विधा ।**
**लक्षणा सा त्रिधा सिद्धसाध्यसाध्याङ्गभेदतः ॥ २ ॥**
**स्फुटास्फुटप्रभेदेन प्रयोजनमपि द्विधा ।**
**विदुः स्फुटं तटस्थत्वादर्थगत्वाद्द्विधा बुधाः ॥ ३ ॥**

---

द्विधापि सा पुनस्त्रिधेत्याह पद्येन—लक्षेति । लक्षणीयं स्वमर्थः तद्वाचकशब्दस्य मीलनं समभिव्याहारोऽमीलनमसमभिव्याहारः । ततो द्विधापि लक्षणा द्विधा । मीलेति समाहारद्वन्द्वः । सा त्रिधा द्विधापि सा पुनस्त्रिधेत्यर्थः । सिद्धमुद्देश्यं, साध्यं विधेयं, साध्याङ्गं विधेयान्वयि । तत्तद्वाचकपदनिष्ठत्वेनेत्यर्थः । अयं भावः । पूर्वोक्ता द्विविधापि लक्षणा लक्ष्यार्थवाचकपदसमभिव्याहृतपदनिष्ठत्वेन तदसमभिव्याहृतपदनिष्ठत्वेन च द्विधा । अग्निर्माणवकः शुक्लो घट इत्यादावाद्या । मञ्चाः क्रोशन्ति कर्मणि कुशल इत्यादौ द्वितीया । एवं द्विविधापि उद्देश्यवाचकपद-निष्ठा, विधेयवाचकपदनिष्ठा, विधेयान्वयिवाचकपदनिष्ठा चेति त्रिधा । यथा भो वृषभ न बुध्यसे इत्यादौ वृषभपदस्योद्देश्यवाचिनो मूर्खे, कामिनीवचोऽमृतमिति विधेयवाचिनोऽमृतपदस्यानन्दजनके, गङ्गायां घोष इत्यादौ विधेयघोषान्वयिवाचिनि गङ्गापदे इति ॥ २ ॥

निरूढलक्षणाया अव्यङ्ग्यकतया अर्वाचीभेदान् व्यङ्ग्यभेदेनाह—स्फुटेत्यादि । स्फुटमगूढमस्फुटं गूढम् । तेन गूढव्यङ्ग्यागूढव्यङ्ग्या चेति द्वौ भेदौ । गूढत्वं वाक्यभावनापरिपक्वबुद्धिविभवमात्रवेद्यत्वम् । अगूढत्वं सर्वजनवेद्यत्वम् । स्फुटमपि तटस्थत्वार्थगतत्वभेदेन द्विधा । तटस्थत्वं च लक्ष्यलक्षकेतरवृत्तित्वेन प्रतीयमानत्वम् । इदं च समासोक्ता-वुपयुज्यते । तथा हि 'अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः' इत्यादौ परनायिकासक्तनायकवृत्तान्तप्रतीतिः प्रयोजनम् । तदर्थमेव हि मुखं चुम्बतीत्यादिलाक्षणिकशब्दप्रयोगः । अग्रं स्पृशतीत्यादिप्रयोगे तदप्रतीतेः । तत्र प्रयोजनस्य तद्वृत्तान्तस्य लक्ष्यलक्षकेतरोदासीननिष्ठतया प्रतीयमा-नत्वमस्तीति । अर्थगत्वादिति पाठः । अर्थाङ्गत्वादित्यपपाठः । तत्त्वं च लक्ष्यलक्षकनिष्ठतया प्रतीयमानत्वम् । तेनागूढव्यङ्ग्या द्विविधा तटस्थप्रयो-जना अर्थगतप्रयोजना चेति ॥ ३ ॥

SGDF
Sri Gargeshwari Digital Foundation

अस्फुटं चार्थनिष्ठत्वात्तटस्थत्वादपि द्विधा ।
लक्ष्यलक्षकनिष्ठत्वादर्थसंस्थमपि द्विधा ॥ ४ ॥
लक्षकस्थं स्फुटं यत्र सा विचक्षणलक्षणा ।
अस्फुटत्वं तटस्थत्वं लक्ष्यस्थत्वममुष्य च ॥ ५ ॥

---

गूढव्यङ्ग्याभेदद्वयमाह—अस्फुटं चेति । चाप्योः स्थानविनिमयः । अस्फुटमपि तटस्थत्वादर्थनिष्ठत्वाच्च द्विधेत्यर्थः । गूढव्यङ्ग्यस्य तटस्थत्वलक्ष्यलक्षकपदार्थवृत्तित्वाभ्यां भेदाभ्यां गूढव्यङ्ग्या लक्षणा द्विधेति भावः । उभयत्रान्त्याद्ययोर्द्वैविध्यमाह—लक्ष्येति । लक्ष्यलक्षकपदार्थनिष्ठप्रयोजनकत्वादित्यर्थः । अस्य च प्रयोजनं रूपके । इन्दुर्मुखमित्यत्रेन्दुपदेनेन्दुतादात्म्यवन्मुखस्य लक्ष्यत्वेन मुखनिष्ठोत्कर्षप्रतीतिः प्रयोजनम् । सा च लक्ष्यनिष्ठैव । एवं मुखमिन्दुरित्यादौ मुखपदेन मुखतादात्म्यापन्नेन्दुर्लक्ष्यते । तत्र लक्षकं मुखपदम् । तदर्थनिष्ठैवोत्कर्षप्रतीतिरिति बोध्यम् ॥ ४ ॥

पूर्वं प्रयोजनस्यैव भेद उक्तो न लक्षणाया इति कश्चित्, तन्मतेन इदानीं लक्षणायाश्चातुर्विध्यमाह—लक्षकस्थमिति । यत्र स्फुटं प्रयोजनं लक्षके सैका । अन्यद्भेदत्रयमाह—अस्फुटत्वमिति । अमुष्य प्रयोजनस्य यतोऽस्फुटत्वं तटस्थत्वं लक्ष्यस्थत्वं चातोऽन्या लक्षणास्तिस्र इत्यर्थः । उपसंहरति—इतीति । च हेतौ प्रकारे वा । ननु प्रयोजनप्रतीतिः शक्तित एव किं नेत्यत आह—व्यक्तेति । शक्तितो व्यक्ता भिन्ना सा लक्षणा चतुर्धेत्यर्थः । शक्त्या प्रयोजनप्रतीतिर्न संभवतीति तदर्थं सैव चतुर्धाङ्गीकार्येति भावः । क्वचित्तु अस्फुटं चार्थेत्यर्धपाठो न दृश्यते । तत्र तं विहायान्यत्सर्वं प्राग्वद्बोध्यम् । क्वचित्तु विदुरिति लक्ष्यलक्षकेति लक्षकस्थमिति क्रमेणार्धत्रयोत्तरम् अस्फुटं चार्थेत्यर्धादग्रे 'अन्त्यास्तिस्र इति व्यक्ता व्यक्तितः' इत्यादिपाठो दृश्यते सोऽपि व्याख्यायते । तत्र स्फुटेत्यादेरवतरणपूर्वकं व्याख्यानं कृतमेव । विदुरिति प्राग्वत् । तत्रैवान्त्यभेदमाह—लक्ष्येति । अर्थः प्राग्वत् । अत्र या अन्त्या उक्ता इयमेव विचक्षणलक्षणेत्युच्यते इत्याह—लक्षकस्थमिति । मुखनिष्ठोत्कर्षप्रतीतये मुखपदमिन्दौ लाक्षणिकं विचक्षणैः प्रयुज्यत इति भावः । गूढव्यङ्ग्याया भेदद्वयमाह—'अस्फुटं चार्थनिष्ठत्वात्तटस्थत्वादपि द्विधा । अन्त्यास्तिस्र इति व्यक्ता व्यक्तितः सा चतुर्विधा' इति । गूढव्यङ्ग्यस्य

SGDF
Sri Gargeshwari Digital Foundation

अन्यास्तिस्र इति व्यक्ता शक्तितः सा चतुर्विधा ।
इन्दुरेवैष तद्वक्त्रमुत्कर्षो लक्ष्यते मुखे ॥ ६ ॥
प्रदीपं वर्धयेत्तत्र तटस्थं मङ्गलोदयः ।

---

तटस्थत्वलक्ष्यलक्षकपदार्थवृत्तित्वाभ्यां भेदाभ्यां गूढव्यङ्ग्या लक्षणा द्विधेत्यर्थः।प्रयोजनवत्या लक्षणाया भेदानुपसंहरति—अन्यास्तिस्र इति। अन्यास्तिस्र इति उद्देश्यवाचिपदनिष्ठत्वादिभेदत्रयविशिष्टप्रयोजनवत्या लक्षणाया अनुवादः । भेदत्रयविशिष्टप्रयोजनवती लक्षणा इति । अनेन प्रकारेण व्यक्तितो व्यञ्जनातः व्यक्ता भिन्ना चतुर्विधेत्यक्षरार्थः । गूढव्यङ्ग्याया भेदद्वयं अगूढव्यङ्ग्याया भेदद्वयं चेत्याशयः । कश्चित्तु विदुः—लक्ष्य—लक्षकस्थमित्यर्धत्रयादग्रे—'अर्थगत्वतटस्थत्वभेदाभ्यामस्फुटस्य च । अन्त्या द्विधेति विज्ञेया व्यक्तितः सा चतुर्विधा' इति पाठो दृश्यते । सोऽपि तथा। तत्रार्धत्रयं तृतीयमतवत् । गूढव्यङ्ग्याया अस्फुटप्रयोजनद्वैविध्याद्भेदमाह—अर्थगेति । चोऽप्यर्थे । अस्फुटस्यापि प्रयोजनस्याभ्यां भेदाभ्यामन्त्या गूढव्यङ्ग्या द्विधेत्यर्थः । उपसंहरति—इतीति । उक्तप्रकारेण सा लक्षणा व्यक्तितो व्यञ्जनातश्चतुर्विधेत्यर्थः । व्यङ्ग्यचातुर्विध्यादिति भावः । कश्चिद् आद्यपक्षैरुभयनिष्ठमपि तत् स्फुटमस्फुटं तटस्थं चेति त्रिधेत्याह सार्धेन—लक्षकस्थमिति । लक्षकपदवाच्यनिष्ठमित्यर्थः । लक्षणाभेदानुपसंहरति—इतीति । शक्तितो व्यक्ता भिन्नेत्यर्थः । चतुर्विधेति। निरूढलक्षणा, स्फुटप्रयोजनवती, अस्फुटप्रयोजनवती, तटस्थप्रयोजनवतीति चातुर्विध्यमित्यर्थ इति व्याचख्यौ । आसां क्रमेणोदाहरणान्याह—इन्दुरेवैष इत्यादि । अत्राद्यमतद्वये लक्षकस्थत्वतटस्थत्वास्फुटलक्ष्यस्थत्वक्रमो बोध्यः । कश्चिन्मते उभयनिष्ठप्रयोजनवतीत्व—लक्षकनिष्ठतटस्थप्रयोजनवतीत्वा—ऽस्फुटप्रयोजनवतीत्व—लक्ष्यनिष्ठस्फुटप्रयोजनवतीत्वक्रमः । तदन्यतमयोस्तूच्यते । इदं च लक्ष्यलक्षकनिष्ठस्फुटव्यङ्ग्याया उदाहरणम् । यदा चन्द्रपदं मुखे लाक्षणिकं तदा लक्ष्यमुखनिष्ठं प्रयोजनं कान्तिमत्त्वम् । यदा तु मुखपदं चन्द्रे लाक्षणिकं तदा लक्षकमुखार्थनिष्ठं तत् स्फुटमेव, लक्ष्ये चन्द्रे प्रागेव तत्प्रतीतेः । वैचित्र्याध्यात [थात्तथान्वयः।?] तथा चात्रैच्छिकोऽन्वय इति भावः ॥ ५ ॥ ६ ॥

तटस्थप्रयोजनवत्या उदाहरणमाह—प्रदीपमिति । इदं च वृद्ध्यर्थ-

SGDF Sri Gurgeshwari Digital Foundation

पटोऽयं दग्ध इत्यादौ स्फुटं नास्ति प्रयोजनम् ॥ ७ ॥
अमृतं सूक्तमित्यादौ लक्ष्यस्थमतिहृद्यता ।
आभिमुख्यात् संनिधानात्तथाऽऽकारप्रतीतितः ॥ ८ ॥
कार्यकारणभावात्[1] सा वाच्यवाचकभावतः ।
इत्येवमादेः संबन्धात् किंचान्यस्माच्चतुष्टयात् ॥ ९ ॥

---

कवृधुधातोर्व्यतिरेकसंबन्धेन नाशे लक्षणया प्रयोगे बोध्यम् । नाशार्थकधातुप्रयोगे अमङ्गलनिवृत्त्यभावात् । तथा चामङ्गलपरिहाररूपप्रयोजनस्यात्र वक्तृश्रोतृनिष्ठत्वात्तटस्थत्वम् । इदं च प्रकरणादिवक्त्रादिसहकारेण स्फुटास्फुटव्यङ्ग्याया द्विविधाया अप्युदाहरणम् । लक्षकनिष्ठास्फुटप्रयोजनवत्या उदाहरणमाह—पटोऽयमिति । अत्र कर्मानर्हत्वप्रतीतिः प्रयोजनं, तच्च दग्धस्यैकदेशलक्षकपटपदार्थेऽवशिष्टपटे प्रतीयते इति लक्षकस्थं प्रयोजनम् । आदिसंग्राह्ये दग्धः पट इत्यत्र तु दग्धपदेन दग्धैकदेशपटलक्षणेऽपि पटनिष्ठमेव तत्, तच्च स्फुटम् ॥ ७ ॥

लक्ष्यस्थस्फुटप्रयोजनवत्या उदाहरणमाह—अमृतमिति । अमृतपदेन रसवल्लक्ष्यते । अतिहृद्यताप्रतीतिश्च प्रयोजनं काव्यनिष्ठमेव । लक्षणाबीजसंबन्धानाह—आभिमुख्यादित्यादि । अङ्गुल्यग्रे करिणां शतमित्यत्राङ्गुल्यग्रशब्दस्य स्वलक्ष्यदेशेनाभिमुख्यं संबन्धः । गङ्गायां घोष इत्यादौ वृक्षाग्रे चन्द्र इत्यादौ च संनिधिः । एकत्र वास्तवोऽपरत्र भ्रान्तिविषयः । अत एव बोद्धरि ज्ञातृत्वेऽस्य लाक्षणिकत्वमन्यथा शक्त्यैव प्रयोग इति भावः । अत्र हेतुमाह—तथाकारेति । वृक्षाग्रसंनिहितोऽयमिति सांनिध्याकारप्रतीतित इत्यर्थः ॥ ८ ॥

कार्येति । घृतमायुरित्यत्र घृतपदलक्ष्ये आयुषि कार्यत्वम् । आयुर्घृतमित्यत्रायुःपदलक्ष्ये घृते कारणत्वम् । भ्रमरपदोच्चारणेऽन्येन कृतेऽन्यप्रयुक्ते द्विरेफमुच्चारयतीति वाक्ये द्विरेफपदस्य योगवृत्त्या लक्ष्ये भ्रमरपदे वाच्यत्वं संबन्धः । घटमुच्चारयतीत्यत्र वाचकतासंबन्धेन घटपदे लक्षणा । इत्येवमादेरित्यादि । क्वचित्तादर्थ्यमिन्द्रार्था स्थूणा इत्यत्र, स्वस्वामिभावः राज्ञः पुरुषः, अग्रहस्त इत्यत्रावयवावयविभावः । इत्येवमादेः संबन्धात् इत्यत्रादिसंगृहीतमेवान्यसंबन्धचतुष्टयप्रदर्शनेन विशदयति—किंचेति । संबन्धादित्यस्यानुषङ्गः ॥ ९ ॥

---

[1] चेति पाठः ।

SGDF
Sri Gargeshwari Digital Foundation

साद्दश्यात् समवायात् सा वैपरीत्यात् क्रियान्वयात् ।
सारोपाध्यवसानाख्ये गौणशुद्धे पृथक् पृथक् ॥ १० ॥
गौणं सारोपमुद्दिष्टमिन्दुर्मुखमितीद्दशम् ।
गौणं साध्यवसानं स्यादिन्दुरेवेदमीद्दशम् ॥ ११ ॥
शुद्धं सारोपमुद्दिष्टमायुर्घृतमितीद्दशम् ।
शुद्धं साध्यवसानं स्यादायुरेवेदमीद्दशम् ॥ १२ ॥

---

साद्दश्यादिति । गौर्वाहीक इत्यत्र साद्दश्यं गोशब्दार्थगोत्वसहचारिणो धर्मा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिमित्तं भवन्ति । यद्वा स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न तु परार्थोऽभिधीयते । यद्वा साधारणगुणाश्रयणेन परार्थ एव लक्ष्यते । छात्रिणो गच्छन्तीत्यत्र समवायः । स च समुदायान्तःपातित्वम् । इदं चासंनिधाने बोध्यम् । तेन संनिधानाद्भेदः । अकुशले कुशलपदप्रयोगे वैपरीत्यसंबन्धः यथा अतक्षाणि तक्षा । युधिष्ठिरोऽयं राजेत्यादौ तत्कार्यकारित्वम् । प्रकारान्तरेण प्रयोजनवत्या भेदद्वयमाह—सारोपेति । मतान्तरेण तदाहेति कश्चित् । लक्षणा द्विधा सारोपाऽध्यवसाना च । तत्रारोप्यमाणारोपविषययोर्भेदेनोक्तौ सारोपा, यत्रारोपविषय आरोप्यमाणस्वरूपेणैवोक्तो न भिन्नरूपेण तत्र साध्यवसाना । सा द्विविधापि द्विधा, गौणशुद्धभेदेन । सामान्ये नपुंसकत्वेन निर्देशः । तत्र साद्दश्यसंबन्धे गौणे । अन्यसंबन्धे शुद्धे इत्यर्थः ॥१०॥

उदाहरणान्याह क्रमेण—गौणं सारोपमिति । इन्दुर्मुखमित्यत्र साद्दश्यसंबन्धादारोप्यारोपविषययोर्भेदोक्तेश्च गौणसारोपेत्यर्थः । इन्दुरेवेदमित्यत्र आरोप्यस्वरूपेणैवारोपविषयस्योक्तेः साद्दश्यसंबन्धाच्च गौणसाध्यवसानेत्यर्थः ॥ ११ ॥

शुद्धं सारोपमिति—आयुर्घृतमित्यत्र कारणत्वसंबन्धाद्भेदेनोपादानाच्च शुद्धसारोपेत्यर्थः । आयुरेवेदमित्यत्र कारणत्वसंबन्धादारोप्यरूपेणैवारोपविषयस्योक्तेश्च शुद्धसाध्यवसानेत्यर्थः । एतेषां भेदानां रूपकादौ उपयोगः । इन्दुपदस्य तादात्म्यसंबन्धेन मुखे लाक्षणिकत्वात् शुद्धसारोपादिसं-

---

१ स्याद्वैपरीति पाठः । २ ‘शुद्धेऽष्टधा पृथक्’ इति ।

SGDF
Sri Gargeshwari Digital Foundation

उपादानार्पणद्वारे द्वे चान्ये इति षड्विधा ।
कुन्ता विशन्ति गङ्गायां घोषो निवसतीति च ॥ १३ ॥
लक्ष्यलक्षकवैशिष्ट्यवैशिष्ट्याद्विविधा पुनः ॥
सरसं काव्यममृतं विद्या स्थिरतरं धनम् ॥ १४ ॥

---

भवात् । एतेन सादृश्यस्य संबन्धत्वे रूपकत्वबाध इत्यादि परास्तम् । सादृश्यस्य तादात्म्यघटकत्वात्तादात्म्यस्याहार्यत्वाच्च ॥ १२ ॥

शुद्धसारोपशुद्धसाध्यवसानयोर्भेदद्वयमाह—उपादेति । स्वार्थस्योपादानेनात्यागेन स्वार्थस्यार्पणेन तदविवक्षयेत्यर्थः । तेनोपादानलक्षणा अर्पणलक्षणा चेति द्वौ भेदौ । इदमेव गीयते जहत्स्वार्थाजहत्स्वार्थेति भेदद्वयम् । शक्यार्थस्य क्रियाद्यन्वयेऽजहत्स्वार्था, शक्यार्थस्य क्रियाद्यन्वयाभावे जहत्स्वार्थेति तात्पर्यम् । उपसंहरति—इतीति । क्रमेणानयोरुदाहरणे आह—कुन्ता विशन्तीति । कुन्ता विशन्तीत्यत्र कुन्तानां प्रवेशान्वयसिद्ध्यर्थं तद्वन्तः पुरुषा लक्ष्यन्ते । गङ्गायां घोष इत्यत्र तु गङ्गापदार्थप्रवाहस्य न घोषान्वयः किं तु तीरलक्षणार्थं तदुपस्थितिमात्रमित्यर्थः । केचित्तु जहदजहत्स्वार्थारूपं तृतीयमपि भेदमाहुः । इयमेव भागत्यागलक्षणा ॥ १३ ॥

भेदद्वयमन्यदाह—लक्ष्येति । लक्ष्यलक्षकयोर्यद्वैशिष्ट्यं विशेषणवत्त्वं तद्रूपवैशिष्ट्याद्विशेषादित्यर्थः । विशिष्टलक्ष्यलक्षकयोर्वैशिष्ट्यं ताभ्यां सह संबन्धः, तस्मादिति वा । पाठस्तु व्यस्तः समस्तो वा । क्रमेणोदाहरति—सरसमिति । अत्र तत्कार्यकारित्वसंबन्धेनामृतपदेन विशिष्टकाव्यत्वे सुखजनकत्वं लक्ष्यते । स्थिरतरं धनमिति पदद्वयेन च विशिष्टधनकार्यकारित्वसंबन्धेन सुखजनकत्वं विद्यायाम् । तत्र विशिष्टं लक्ष्यम् । अत्र विशिष्टं लक्षकमिति भेदः । तथा च आद्ये विशिष्टकाव्योद्देशेनामृतत्वं विधेयं, द्वितीये विद्योद्देशेन विशिष्टधनत्वं विधेयम् । तथा च विशेषणविशिष्टोद्देश्यवाचकपदनिष्ठा तादृशविधेयवाचकपदनिष्ठा चेति द्वौ भेदौ । पूर्वं तु शुद्धोद्देश्यविधेयवाचकपदनिष्ठावुक्ताविति न पौनरुक्त्यम् । वैशिष्ट्यादिति पाठो युक्तः । क्वचिदन्यतरत्र क्वचिदुभयत्र विशेषणमित्येकः पक्षः उभयत्राविशेषणत्वमित्यपरः । तेन व्युत्क्रमेण तत्राद्योदाहरणद्वयदानेऽप्य(?पि) विद्या धनमित्याद्युदाहरणं बोध्यम् (?) । केचित्तु गभीरायां नद्या

SGDF
Sri Gargeshwari Digital Foundation

**तथा सहेतुरतथाभेदभिन्ना च कुत्रचित् ।**
**सौन्दर्येणैष कन्दर्पः सा च मूर्तिमती रतिः ॥ १५ ॥**
**शब्दे पदार्थे वाक्यार्थे संख्यायां कारके तथा ।**
**लिङ्गे चेयमलङ्काराङ्कुरबीजतया स्थिता ॥ १६ ॥**
**महादेवः० । महति नवसंख्यः० ॥ १७ ॥**

इति श्रीजयदेवकविविरचिते चन्द्रालोकालङ्कारे लक्षणानिरूपणो नाम नवमो मयूखः ।

---

घोष इत्यादौ नदीपदमेव विशिष्टनदीतीरे लाक्षणिकं गभीरपदं तात्पर्यग्राहकं यथा तथाऽत्रापीत्याहुः ॥ १४ ॥

सहेतुनिर्हेतुभेदेन भेदद्वयमन्यदप्याह—तथेति । उक्तवदित्यर्थः । अतथाऽहेतुरितिभेदेन भिन्नापि कचिदित्यर्थः । अनयोः क्रमेणोदाहरणे आह—सौन्दर्येणैष इति । तत्र चायं हेतुः । सा चेति द्वितीयोदाहरणं सौन्दर्येणेत्यस्यानन्वयात् । तत्राप्येतदन्वये तु तदुदाहरणं गङ्गायामित्यादि स्फुटमेव बोध्यम् ॥ १५ ॥

उपाध्यन्तरेण पुनर्भेदान्तरमाह—शब्दे इति । शब्दे पदवाक्यान्यतररूपे । तत्र पदे अग्नेरग्निर्नष्टम् इत्यत्र अग्निशब्देनार्चिर्लक्ष्यते । वाक्ये······· ·····'मुखं चन्द्र इत्यत्र मुखपदार्थेन तादात्म्यं लक्ष्यते । यद् गुरुवचनमाकर्णयन्ति तदमृतं पिबन्तीति वाक्यार्थे, अत्र वाक्यार्थयोरैक्यारोपात् । यावन्तो युद्धप्रियास्तावन्तोऽर्जुना इत्यत्र बहुत्वसंख्यया पूज्यत्वम् । स्थाली पचतीत्यधिकरणकारके । हस्तिन्यां हस्तीति लिङ्गे । ननु लक्षणानिरूपणमफलमत आह—अलमिति । अलङ्कारपदस्योपलक्षणत्वेन रसादेर्बीजाङ्कुरत्वेन च स्थिता अङ्गीकृतेत्यर्थः । रूपकाद्यलंकारनिर्वाहकत्वेन अलंकारादेस्तदङ्कुरत्वम् ॥ १६ ॥

महादेव इति प्राग्वत् । महति नवसंख्य इति विशेषः ॥ १७ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां नवमो विलासः ।

---

SGDF
Sri Gargeshwari Digital Foundation

## दशमो मयूखः ।

धर्मं कंचित् पुरस्कृत्य प्रायः शब्दः प्रवर्तते ।
यथार्थं स्पष्टमाचष्टे शब्दस्तामभिधां विदुः ॥ १ ॥
जात्या गुणेन क्रियया वस्तुयोगेन संज्ञया ।
निर्देशेन तथा प्राहुः षड्विधामभिधां बुधाः ॥ २ ॥

---

लक्षणां निरूप्य तद्धेतुभूता शक्तिमुत्तरार्धेन निरूपयितुं वस्तुस्थितिं तदुपोद्घातत्वेनाह—धर्ममिति । समानेष्वनुगतो व्यावर्तकश्च धर्म इत्युच्यते । तत्रैव तदवच्छिन्ने वा शक्तिर्न केवलव्यक्तावित्यर्थः । अयं भावः । तत्पक्षे सर्वव्यक्तिषु शक्तिरुत एकत्र । नाद्यः । आनन्त्यात् । नान्त्यो व्यभिचारापत्तेः । गोशुक्लादीनां व्यक्त्यैक्येनार्थाभेदात्सहप्रयोगानापत्तेश्च । प्राय इति तु धर्मस्य नानात्वेनैकस्यान्यत्राभावेन, आकाशादावनन्तशक्तिकल्पनाद्यभावेन व्यक्तिमात्रशक्तावदोषेण वा । एवमन्यत्र बोध्यमिति । यया वृत्त्या शब्दः स्पष्टं साक्षादर्थमाचष्टे सा अभिधा । साक्षात्त्वं चार्थान्तरप्रतीत्यद्वारकत्वम् । तथा च अव्यवधानेन शब्दजन्यार्थप्रतीत्यनुकूला वृत्तिरभिधेति लक्षणम् । लक्षणादिवारणाय अव्यवधानेनेति । तादृशचेष्टादिवारणायावशिष्टम् । सा चास्मात्पदादयमर्थो बोद्धव्य इत्याकारिका ईश्वरेच्छेति न्यायविदः, पदार्थान्तरमिति मीमांसकादयः । अस्या एव संकेत इति व्यवहारः । साक्षाच्छब्दजन्यार्थप्रतीतिसहकारिज्ञानविषयत्वं वा । ननु शक्तिज्ञानस्य सहकारित्वे किं बीजमिति चेदगृहीतशक्तिकशब्दादर्थप्रत्ययाभाव एवेति गृहाण ॥ १ ॥

स च धर्मः षड्विधः । तेन षोढा अभिधा साक्षाच्छब्दवृत्तिरित्याह—जात्येत्यादिना । षड्विधः शब्दो जातिशब्दो गुणशब्दः क्रियाशब्दो वस्तुयोगशब्दो यदृच्छाशब्दो निर्देशशब्द इति । सर्वेषु द्रव्यवाचकघटादिपदेषु जातिरेव वाच्या वाच्यतावच्छेदिका वा । शुक्लादिपदेषु गुणगुण्यन्वयवाचिपदसामानाधिकरण्येऽपि गुण एव वाच्यो न तन्निष्ठनीलत्वादिजातिस्तदभावात्(?)। नापि गुणी गौरवात् । लक्षणया सामानाधिकरण्याद्युपपत्तेश्च । वाच्यतावच्छेदको वा गुणः । एवं पाचकादिपदे पाकादिक्रियैव वाच्या तस्या एव प्रतीतेरेकत्वाच्च वाच्यतावच्छेदकत्वं वा । एवं दण्डीत्यादौ दण्ड-

---

१ च मन्यन्ते इति पाठः ।

SGDF
Sri Gargeshwari Digital Foundation

[1]गौर्नीलः पाचको दण्डी डित्थः कंस इति क्रमात् ।
[2]कं संहिनस्ति कंसारिर्नरं च कं समाश्रितम् ॥ ३ ॥

संबन्धो वाच्यो वाच्यतावच्छेदको वा पाचकादिपदे पाकस्य विशेषणत्वेन भानादिह दण्डसंबन्धस्य विशेषणत्वेन भानाद्भेदः । डित्थादियदृच्छाशब्देषु शब्द एव वाच्यो वाच्यतावच्छेदको वा । एवं कंसपरिक्षिचामुण्डादिपदेषु निर्देश एव वाच्यः शक्यतावच्छेदको वा । निर्देशश्च वाचकवर्णानां स्वपरत्वम् । यथा कंसमित्यत्र कंकारसकारावेव कंसपदेन प्रतीयेते । पाठान्तरे कं समाश्रितमित्यत्रेति बोध्यम् । तत्र नरकपदान्तर्गतसानुस्वारककारद्वारा नरकप्रतीतिः । इदं पाठद्वयसाधारणं, कंसपदान्तर्गतसानुस्वारककारद्वारा कंसप्रतीतिः । यद्वा । समाश्रितपदान्तर्गतसानुस्वारसकारस्तमाश्रितप्रतीतिः। तथा च स्वोपस्थाप्यसानुस्वारककारसकारवत्पदवत्त्वसंबन्धेन कंकारसंकारवत्त्वैव वाच्या वाच्यतावच्छेदिका वा । एवं चामुण्डादिपदेष्वपि चण्डमुण्डनयनवत्त्वादिसंबन्धेन वर्णत्रयवत्त्वमेव शक्यं तथा वा । एवं परिक्षिदादिपदे परिक्षीणे कुले जात इत्यादिसंबन्धेन तद्वर्णवत्त्वं बोध्यम् । एतेषु च जातिगुणक्रियासंबन्धानामसिद्धेर्न जात्यादिशब्दत्वम् । नापि यदृच्छाशब्दत्वं संबन्धप्रदर्शनात् । नापि यौगिकत्वं शुद्धतन्मूलसंभिन्नेति योगत्रयासंभवात् । नापि लक्षणा संबन्धाग्रहात् । द्विरेफपदस्य भ्रमरपदादौ रेफद्वयज्ञानसत्त्वाद् युक्ता लक्षणा । नापि लक्षितलक्षणा लक्षणालक्षणाया(?)अभावात् । अतस्ते वर्णा एव शक्यतावच्छेदकाः शक्या वेति बोध्यम् । यत्र जात्यादयः संबन्धेन न व्यवहितास्तत्र त एव प्रवृत्तिनिमित्तानि वाच्या वा । यत्र तु तेन व्यवहितास्तत्र वस्तुयोग एव तथा । वस्तुनो दण्डादेर्योगः संबन्ध इति तदर्थः । यथा दण्डी गोत्ववानित्यादौ । अत एव द्रव्ययोग इत्युपेक्ष्य वस्तुयोग इत्युक्तम् । वस्तु इत्येव तु नोक्तं संबन्धव्यव्यवहितस्य तस्याप्राधान्येन प्रधानसंबन्धस्यैव तत्त्वात् जात्यादेरपि वस्तुत्वेनैकविध्यप्रसङ्गाच्च । यद्यपि डित्थादावप्यसाधारणधर्म एव प्रवृत्तिनिमित्तं संभवति तथापि यदृच्छापरिकल्पितत्वेन जात्यादितो वैलक्षण्यम् । जातिव्यक्तिपक्षयोरुत्पत्तिस्त्वन्यत्र स्फुटेति नेह तन्यते ॥ २ ॥

क्रमेणोदाहरणान्याह—गौरित्यादि । सर्वे एकवचनान्ताः । ननु कंस-

१ गौः शुक्लः इति पाठः । २ कथं हिनस्तीति पाठः ।

SGDF
Sri Gargeshwari Digital Foundation

न योगादेरायतनं न सङ्केतनिकेतनम् ।
वृत्त्या निर्देशशब्दोऽयं मुख्यया स्वाभिधेयया ॥ ४ ॥
पीयूषवर्षप्रभवं चन्द्रालोकमनोहरम् ।
सुधानिधानमासाद्य श्रयध्वं विबुधा मुदम् ॥ ५ ॥

---

त्वस्य देवदत्तत्ववज्जात्यादिरूपतया कथं निर्देशस्य प्रवृत्तिनिमित्तत्वमित्याशङ्क्योपपादनेन निर्देशमेव प्रदर्शयति—कंसमिति । नरं चेति पाठः । कंसारिः कं संहिनस्तीति प्रश्नः । तत्रोत्तरं कं ककारं समाश्रितं नरं नरकं, सम् आश्रितं कं कंसं चेत्यर्थः । यद्वा । कंसारिः कंसं पदद्वयमेकं वा, हिनस्ति । कंकारसंकारयोर्व्युत्पत्तिमाह—नरमिति प्राग्वत् । कथं हिनस्तीति क्वचित्पाठः तत्र नरकं चेत्याद्येव कर्म । कंसनरकौ विष्णुना कथं हताविति प्रश्नमात्रं कस्यचित् । नरं कमिति पाठेऽपि योजना प्रागुक्ता । अयं भावः । यत्र शब्दः स्वपरस्तत्र निर्देशः कंसमित्यत्र समाश्रितं कमित्यत्र वा आहत्य सकारककारशब्दौ प्रतीयेते न च वृत्तिं विना प्रतीतिः संभवतीति तत्र शक्तिरेव वृत्त्यन्तरासंभवात् । एवं च शब्दस्य स्वपरत्वे जात्यादिभिन्नविषया षष्ठ्यभिधैवेति षड्विधत्वम् । एवं चैवंविधैः प्रयोगैः प्रतीयमानकंसादिशब्दो यत्र तत्र व्युत्पत्त्या निर्दिश्यत इति निर्देशस्तथा निर्देशपदेन शब्दग्रहणात् । यत्र तु कंसो हत इत्यादावर्थपरता तत्र जात्यादिपरत्वम् । नैवं प्रकृते, समाश्रितं कंसमित्यत्र वा, शब्दस्यैव प्रतीतेरिति ॥ ३ ॥

निर्देशशब्दे प्रोक्तमेवोपपादयन्नुपसंहरति—नेति । आदिना जात्यादिपरिग्रहः । विशेषेण तत्रान्तर्भावसंभावनया पृथगाह—न संकेतेति । संकेतो यदृच्छाशब्दत्वम् । हेतुस्तु सर्वत्रोक्त एव । तथा च नायं यौगिको नापि रूढो नापि डित्थादिवत्संकेतितः, तस्मान्मुख्यया वृत्त्या शक्त्या अयं पूर्वोक्तो निर्देशशब्दः परिकीर्तित इत्यर्थः । स्वं वर्णद्वयमेवाभिधेयं यस्यामिति बहुव्रीहेर्वृत्तिविशेषणम् । स्वाभिधा ययेति पाठे तु यया मुख्यया वृत्त्या स्वाभिधा स्वरूपस्याभिधानं प्रतिपादनं शब्देन सा मुख्या वृत्तिरेका जात्यादिस्थलभिन्नाङ्गीकार्येत्ययं निर्देशशब्दस्ततो भिन्न एवेत्यर्थः । निर्देशे स्वरूपे शब्द इति सप्तमीतत्पुरुष इति भावः ॥ ४ ॥

ग्रन्थस्य फलमाह—पीयूषेति । पीयूषवर्षेति जयदेवस्यैव योगरूढं



SGDF
Sri Gurgeshwari Digital Foundation

जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः ॥
सूक्तिपीयूषवर्षस्य जयदेवकवेर्गिरः ॥ ६ ॥
महादेवः० ॥ जयदेवेन दशभिः० ॥ ७ ॥

इति चन्द्रालोकालङ्कारेऽभिधानिरूपणो नाम दशमो मयूखः ॥ १० ॥

---

नामान्तरं चन्द्रश्च । चन्द्रालोकेन तदाख्यग्रन्थेन च मनोहरं, लोकमिति पाठे तु मनोहरं तमुभयमित्यर्थः । सुधानिधानं सुधास्थानं तत्प्रायं चासाद्य प्राप्य मुदं प्रीतिं श्रयध्वमाश्रयध्वम् । हे विबुधा देवाः पण्डिताश्चेत्यर्थः ॥ ५ ॥

स्वादिकीर्तये आह—जयन्तीति । संज्ञापक्षे सूक्तीति बहुव्रीहिः । सूक्तेति पाठेप्येवम् । योगस्तु स्फुट एव । गिरः उक्तरूपाः जयन्ति निर्दुष्टत्वादिति भावः ॥ ६ ॥

महादेव इति पूर्ववत् । दशभिरितीति विशेषः । 'प्रणीतस्तेनासौ सुकविजयदेवेन दशमभ्दिरं चन्द्रालोके सुखयतु मयूखोदश दिशः' इत्युत्तरार्धे पाठान्तरम् ॥ ७ ॥

इति श्रीमत्पायगुण्डोपनामकवैद्यनाथभट्टविरचितायां चन्द्रालोकव्याख्यायां रमाख्यायां दशमो विलासः ।

---

समाप्तश्चन्द्रालोकालंकारः ।

SGDF
Sri Gargeshwari Digital Foundation

## 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

### श्रीमद्भगवद्गीता

**Bhagavat=Geeta with 7 commentaires**

१ **प्रथमो गुच्छः**—आनन्दगिरिकृतटीकासंवलितशांकरभाष्य-जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्व) भाष्य-रामानुजभाष्य-पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी-नीलकण्ठी-समेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... ... ... ... ६ -०- ०

### श्रीमद्भगवद्गीता

**Bhagavat=Geeta with 8 other commentaries**

२ **द्वितीयो गुच्छः । प्रथमषट्कम्**—निम्बार्कमतानुयायिश्री-केशवकाश्मीरिभट्टाचार्यपादप्रणीता—' **तत्त्वप्रकाशिका** ' श्रीमधुसूदनसरस्वतीकृता–' **गूढार्थदीपिका** ' श्रीशङ्करानन्द-प्रणीता–'**तात्पर्यबोधिनी**' श्रीधरस्वामिकृता–'**सुबोधिनी**' श्रीसदानन्दविरचितः–' **भावप्रकाशः** ' श्रीधनपतिसूरिविर-चिता–'**भाष्योत्कर्षदीपिका**' दैवज्ञपण्डितश्रीसूर्यविरचिता–' **परमार्थप्रपा** ' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–' **अर्थ-संग्रहः**' इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलत-माक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लेशिषतेति । पत्रसंख्या सार्धपञ्चशतानि । मूल्यम् रू. ... ... ३ -१२- ०

**द्वितीयो गुच्छः । द्वितीयं षट्कम् ।** षष्ठाद्द्विादशा-ध्यायान्तम् । तत्त्वप्रकाशिकाद्यष्टटीकोपेतम् । मूल्यम् रू. ... २ -१२- ०

**Uttara=Geeta with a commentary**

३ **उत्तरगीता**—गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पा-दश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महि-मानमवगमयितुम् । मू. रू. ... ... ... ० -३- ०

SGDF
Sri Gargeshwari Digital Foundation

## श्रीमद्वाल्मीकिरामायणम्

**Valmiki Ramayana with 3 well-known commentaries Bal Kanda**

४ **बालकाण्डम्**—सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च षड्भिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । मूल्यम् रू. ... ३-०-०

**Ayodhya Kanda**

**अयोध्याकाण्डम् । द्वितीयखण्डम्**—उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... ... ... ५-०-०

**Stotra-muktahar containing 256 Stotras**

५ **स्तोत्रमुक्ताहारः**—अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वममुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नममाकममुमिति । मूल्यम् रू. ... ... ... ०-८-०

**Samskar Mayukha**

६ **संस्कारमयूखः**—मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः। अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभावनास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया च भृशं दुर्बोधो विपरीतबोधकश्चासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमा-

SGDF
Sri Gargeshwari Digital Foundation

साय विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रू. ... ... ... ... ०-१२-०

**Manu Smriti**

७ **मनुस्मृतिः**—कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... ... ... १-८-०

**Vidura-Niti with a commentary**

८ **विदुरनीतिः**-संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ... ... ... ०-४-०

**Vedanta Rahasya**

९ **वेदान्तरहस्यम्**-वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू. ... ... ... ०-१-०

**Vishishtadvaita-Mata-Vijaya-Vada**

१० **विशिष्टाद्वैतमतविजयवादः**-नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ... ... ... ०-१-०

**Kumar Sambhav with 3 known commentaries**

११ **कुमारसंभवं महाकाव्यम्**-कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. ... ... ... ... ... १-४-०

**Raghuvamsha Mallinatha's commentary**

१२ **रघुवंशमहाकाव्यम्**-श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... ... ०-१०-०

## कारिकावली

**Karikavalee with Siddhanta-Muktavali and other notes**

१३ **सिद्धान्तमुक्तावलीसहिता**-न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता

SGDF
Sri Gargeshwari Digital Foundation

कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित-जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता। सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मूल्यम् रू. ... ... ... ... ०-७-०

**Vaisheshika Darshana with several commentaries**

१४ **वैशेषिकदर्शनम्**—श्रीशंकरमिश्रकृत—**वैशेषिकसूत्रोपस्कार**—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत-**विवृति**--चन्द्रकान्तभट्टाचार्यप्रणीत-**भाष्य**सहितम् । मू. रू. ... २-०-०

**Vadartha Samgraha**

१५ **वादार्थसंग्रहः ( प्रथमो भागः )**—अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः। पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ... ... ... ०-६-०

**वादार्थसंग्रहः ( द्वितीयोभागः )**-अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम् । जयरामभट्टाचार्यकृतः कारकवादः समासवादश्च, एवकारवादश्चेति चत्वारो ग्रन्थाः सन्ति । ०-६-०

**Maha Bhagavata**

१६ **महाभागवतम्**-देवीपुराणम् । अस्मिन् भगवत्या ब्रह्मस्वरूपिण्या महाकाल्या दाक्षायणी-गङ्गा-पार्वती-श्रीकृष्णेत्यवतारचतुष्टयचरितानि, महाकाल्या मूलस्थानं च प्रधानतयोपवर्णितानि । प्रसङ्गाद्रामचरितं स्कन्दचरितं पाण्डवचरितं गणेशोत्पत्तिर्गङ्गावतरणं भगवतीगीता ललितासहस्रनाम शिवसहस्रनामादयश्च विषया निरूपिताः । सार्धपञ्चसाहस्रीसंहितेयम् मू. ... २-०-०

**Taittiriya-Upanishat**

१७ **तैत्तिरीयोपनिषत्**—श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता । ... १-०-०

**Antiashti-Dipika**

१८ **अन्त्येष्टिदीपिका**-सामगानाम् ... ... ०-१२-०

SGDF
Sri Gurgeshwari Digital Foundation

**Gobhiliya=grahye=Karmma=prakashika**

१९ **गोभिलीयगृह्यकर्मप्रकाशिका**—सामवेदीयषोडशसंस्कार–नित्याह्निकसमेता ... ... ... ... ३ –८– ०

**Chandrakanta (Hindi)**

**चन्द्रकान्त** ( वेदान्त ज्ञानका मुखग्रन्थ ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "**चन्द्रकान्त**" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक '**गुजराती**' पत्रके मुख्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ **इच्छाराम सूर्यराम** देसाईके शुद्ध हृदयमें दैदीप्यमान प्रबोधरत्न–भाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रू. ... ... ... ... ... २ –८– ०

**युक्तिप्रकाश**—विचारसागरका कर्ता साधु श्रीनिश्चलदासजीने किया हुआ यह ग्रन्थ हिन्दुस्तानी भाषामें है. इसमें वेदान्तका ३९ सिद्धान्त बहुत अच्छीतरहसे सिद्ध किये गये है. निश्चलदासकी वाणी सब जिज्ञासुलोकोंको ज्ञात होनेसे विशेष निरूपणकी कुछ जरूरत है नहीं. और जिज्ञासुलोकोंको ये ग्रन्थ बहुत उपयुक्त है. पक्की जिल्द और अच्छा कागज. ... १ –०– ०

'**गुजराती**' मुद्रणालयाधिपतिः ।

कोट सासून बिल्डिंग—**मुंबई.**

SGDF
Sri Gargeshwari Digital Foundation

